राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमालायाः प्रथमं पुष्पम्

राजेन्द्रप्रसादशर्मा

# बौद्धार्थबाह्यार्थ-पर्यालोचनम्

दर्शनविभागः
राजस्थानविश्वविद्यालयः

# बौद्धार्थबाह्यार्थपर्यालोचनम्

राजेन्द्रप्रसाद शर्मा




दर्शनविभागः
राजस्थानविश्वविद्यालयः
जयपुरम्

१९९३

राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमाला : १
प्रधानसम्पादक : विश्वम्भरपहिः
समन्वयक : विशेषसहायताकार्यक्रमस्य

विश्वविद्यालयानुदानायोगस्य राजस्थानसर्वकारस्य च विशेषसहायता-कार्यक्रमपरियोजनायां राजस्थानविश्वविद्यालयदर्शनविभागेन १९९३ तमे ईस्वीऽब्दे प्रकाशितः शोधग्रन्थः ।



ISBN

जयपुरे त्रिपोलियाबाजारे किशोरनिवासस्थेन
अमरज्योतिकम्प्यूटर्सद्वारा टङ्कितः
जयपुरे एम. आई. रोड़स्थेन
जयपुर प्रिन्टर्स प्राइवेट लिमिटेड द्वारा
मुद्रितश्च ।

UNIVERSITY OF RAJASTHAN STUDIES IN INDIAN PHILOSOPHY : 1

# BAUDDHĀRTHABĀHYĀRTHA-PARYĀLOCANAM

RAJENDRA PRASAD SHARMA




DEPARTMENT OF PHILOSOPHY
UNIVERSITY OF RAJASTHAN
JAIPUR
1993

मात्रे श्रद्धास्वभावाय पित्रे च तपसात्मने ।
गुरवे ज्ञानरूपाय कृतिमेतां समर्पये ॥
दर्शनाब्धिसुतीर्णाय तर्कपारङ्गताय च ।
गुरुविश्वम्भराख्याय कृतिरेषा समर्प्यते ॥

## पर्यालोचनानुक्रमः

---

आदौ भजाम्यभयदं खलु भक्तशोक-
दावानलं गणविभुं वरकुञ्जरास्यम् ।
अज्ञानकाननविनाशनहव्यवाह-
मुत्साहवर्धनमहं सुतमीश्वरस्य ॥१॥
आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरूं नित्यमहं भजामि ॥२॥
हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः,
सेतुः संसारवारान्निधिसुखतरणे श्रीमहादेवसंज्ञम् ।
प्रालेयज्ज्योतिरन्तःपरिणततिमिरव्यूहविच्छेददक्षम्,
किञ्चिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥३॥
चाञ्चल्यारुणलोचनाञ्चितकृपां चन्द्रार्कचूडामणिम्,
चारुस्मेरमुखां चराचरजगत्संरक्षणीं सत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जिताम्,
नीलाश्माचलवासिनीं भगवतीं कामेश्वरीं भावये ॥४॥
सिंहादुत्थायकोपाद्धधडधडधडा धावमाना भवानी,
शत्रूणां शस्त्रपातैस्ततडतडतडा त्रोटयन्ती शिरांसि ।
तेषां रक्तं पिबन्ती घुघटघटघटा घोटयन्ती पिशाचान्,
तृप्तैस्तृप्तैर्हसन्ती खखलखलखला शाम्भवी मां पुनातु ॥५॥
शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा ।
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।

हराहिभ्यो भीता सरसिरुहसौभाग्यजननी ।
सखीषु स्मेरा ते मयि जननि दृष्टिस्सकरुणा ॥६॥(भगवच्छङ्करस्य)

मातरं पितरं नत्वा गुरुं च कुलदेवताम् ।
राजेन्द्रशर्मनामाहं कुर्वे बौद्धार्थखण्डनम् ॥७॥

शब्दार्थशास्त्रबोधाय प्रवृत्ता ये महर्षयः ।
तेषां परम्परां नत्वा पर्यालोचनमुच्यते ॥८॥

अन्वर्थिताह्वयश्रीमद्विश्वम्भरगुरोः गिरा ।
अर्थगौरवया गुर्व्या गृहीतगतिको मुदा ॥९॥

प्रबन्धेऽस्मिन् प्रवृत्तोऽस्मि न्यायव्याकरणदृशा ।
बौद्धार्थखण्डनं तर्कैः कृतं भाष्यादियुक्तिभिः ॥१०॥

अष्टके पाणिनीयेऽस्मिन्नर्थो बाह्योऽभिधीयते ।
न बौद्धार्थः क्वचित्प्रोक्त इत्यसाधि निदर्शनैः ॥११॥

वन्ध्यापुत्रशशशृङ्गप्रभृतीनां हि शास्त्रतः ।
प्रातिपदिकसंज्ञार्थं[1] बौद्धार्थः स्वीकृतोऽस्ति चेत् ॥१२॥

भूषणे[2] कौण्डभट्टेन बौद्धार्थाङ्गीकृतिं विना ।
साधिता शास्त्ररीत्या सा न दोषो दृश्यते क्वचित् ॥१३॥

नैयायिकैश्चाप्यर्थानां बाह्यसत्तैव मन्यते[3] ।
वाच्योऽपि बुद्धिविषयो वन्ध्यापत्यस्य जायते ॥१४॥

स्यात्प्रातिपदिकत्वं वै तथात्वे दोषवर्जितम् ।
अतो बौद्धार्थसिद्ध्यर्थं न कार्या क्लिष्टकल्पना ॥१५॥

सम्प्रत्यतीतागामिन्यस्तिस्रः सत्ताः समादृताः ।
बाह्यार्थानां महाभाष्ये[4] ताभिरिष्टं सुसिध्यति ॥१६॥

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा पृ. ३१६ (सभापति संस्करणम्), उद्द्योते १.२.४६, लघुशब्देन्दुशेखरः कृत्तद्धितेतिसूत्रम्, परमलघुमञ्जूषा पृ. १७० ।

२. बृहद्वैयाकरणभूषणं धात्वर्थनिर्णयः पृ. ४८, समासशक्तिनिर्णयः पृ. १७० ।

३. न्यायसूत्रभाष्यम् २.१.५६, न्यायमञ्जरी पृ. ९९-१०२, न्यायकौस्तुभः शब्दपरिच्छेदः पृ. ६६९-६७०, श्लोकवार्त्तिकं प्रत्यक्षसूत्रम् १७९-२२६,, तर्ककुतूहलम् ३३३, ४०४ ।

४. महाभाष्यम् ५.२.९८ ।

वृक्षोऽस्तीत्यत्र वृक्षस्था सत्तैवाऽस्त्या विशेष्यते ।
वर्तमानतयेत्यत्र न बौद्धार्थः प्रयोजनम् ॥१७॥
वृक्षव्यक्तेरतीतायाः सत्तायाः साम्प्रतं पुनः ।
अभावबोधनार्थं तु नास्तीत्यपि प्रयुज्यते ॥१८॥
नात्रोपचारसत्तायाः कल्पनं तर्कसङ्गतम् ।
न च बौद्धार्थसिद्ध्यर्थं कार्यं भाष्यकदर्थनम् ॥१९॥
मतुबादिषु सूत्रेषु[1] ह्यर्थानां बाह्यसत्तया ।
प्रत्ययाः धातुसम्बन्धे भाष्यादुक्ता[2] भवन्ति हि ॥२०॥
उपदेशेऽपि[3] बाह्योऽर्थोऽजनुनासिक इद्भवेत् ।
इत्येव भाष्यतात्पर्यं न तु बौद्धार्थकल्पने ॥२१॥
अर्थस्यान्यप्रमाणत्वादिति पाणिनिवर्णितात्[4] ।
हेतोरर्थस्य बाह्यत्वं गम्यते शास्त्रसम्मतम् ॥२२॥
तथापि कैश्चिद् बौद्धार्थः पाणिनीयेऽत्र कथ्यते ।
अशास्त्रीयो ह्यतस्तस्य प्रत्याख्यानं चिकीर्षितम् ॥२३॥
गुरुदर्शितमार्गेण प्रत्याख्यानं प्रकुर्वता ।
न क्वचिच्छास्त्रमर्यादोल्लङ्घनं मयका कृतम् ॥२४॥
स्वसिद्धान्तस्य दार्ढ्यार्थं प्रमाणानीह सर्वथा ।
शास्त्रपद्धतिमाश्रित्य प्रस्तुतानि न चान्यथा ॥२५॥
दोषान् सर्वेषु शास्त्रेषु समीक्षन्ते समीक्षकाः ।
किञ्चैतांस्ते गुणानाहुः साहित्यश्रीसमृद्धये ॥२६॥
एवमेवात्र विद्वांसः प्रेक्षिष्यन्ते निरीक्षकाः ।
विरमामि निवेद्येत्थं बहुवक्तव्यविस्तरात् ॥२७॥
एष बालप्रयत्नो मे प्रबन्धो मामको बुधाः ।
शुभाशिषः प्रयुञ्जाना वर्द्धयन्तु मनो मम ॥२८॥

---

१. महाभाष्यम् ५.२.९४ ।
२. महाभाष्यम् ३.४.१ ।
३. महाभाष्यम् १.३.२ ।
४. पाणिनिसूत्रम् १.२.५६, "प्रधानप्रत्ययार्थवचनमर्थस्यान्य प्रमाणत्वात्" ।

# भूमिका

अस्य प्रस्तूयमानस्य शोधप्रबन्धस्यादौ भूमिकेयमवतार्यते, परन्तु येयं भूमिका सर्वादावेव प्रतन्यते, सा खलु समग्रस्यापि प्रबन्धग्रन्थस्य विरचनं परिसमाप्यैव विरच्यत इति नितरामेव चित्रम् । किन्त्वियमेव विश्वप्रपञ्चस्यैव रीतिरिति कुतोऽस्या निष्कृतिः । प्रकृतमनुसरामि ।

तत्रभवतां भवतां सुविदितमेव यत् कस्यापि वस्तुनः (प्रमेयस्य) सिद्धिः प्रमाणाधीनैव भवति । अत एव प्राधान्येन सर्वैः शास्त्रकृद्भिः महर्षिभिः प्रमाणान्येव सुनिरूपितानि । प्रमाणेषु शब्दप्रमाणमादाय यत्र शास्त्रे विचारणा विधीयते, असावेव शब्दखण्ड इति व्यवह्रियते । शब्दखण्डे व्याकरणशास्त्रस्यार्थप्रक्रिया शाब्दबोधो वा विमृश्यते । शब्दसाधुत्वप्रक्रियायां वैयाकरणा एव प्रमाणम् । परञ्चार्थप्रक्रियायां नैरुक्तनैयायिकमीमांस-कालङ्कारिकाणामपि लोकव्यवहारस्य च प्रवेशो वैयाकरणैः सहैव भवति । व्याकरणशास्त्रादन्यानि शास्त्राणि शास्त्रकारा अपि भाषाया अर्थतत्त्वचिन्तनं शाब्दबोधव्यवस्थाञ्च स्वस्वशास्त्रे विचारयन्त्येव । तत्र भाषाया अर्थस्य स्वरूपं किम् ? इति प्रश्नः सर्वेषां भाषाप्रयोक्तृणां मनुष्याणां समक्षे सर्वदा तिष्ठति । अतोऽतिप्राचीने ऋग्वेदेऽपि भाषातत्त्वचिन्तनं समुपलभ्यते । तस्यां भाषातत्त्वचिन्तनपरम्परायामेवायं प्रकृतशोधविषयः । अत्रार्थो बौद्धो बुद्धिरूपाधिकरणस्थो, बाह्यो घटपटात्मको वेत्येव विचारविषयः । स च शास्त्रीयमतभिन्नतावशाज्जटिलविवादो निरवसादो जागर्तितरां नितरामन्यैरपि विविधैर्मतद्वैधैः सार्द्धं व्याकरणन्यायमीमांसादिशाब्दबोधव्यवस्थापकशास्त्राणां परम्परायाम् । सविशेषः पक्षविपक्षगतविविधवादविवादप्रवाहो न केवलं संस्कृतं भारतीयशास्त्रीयपरम्परां वा प्रोज्जीवयति किन्तु प्रतिष्ठापयति पदे पदे गौरवास्पदे पदे ।

एवमेव विवादप्रवाहे शब्दार्थस्य बौद्धत्वं वा बाह्यत्वमिति विषयेऽपि भर्तृहरिकालादेवानुवर्तमानो विवादो प्रतिदिनमेधमानः सच्छायकाय एवावलोक्यते । तत्र पदशास्त्रपरम्परायां वाक्यपदीयतट्टीकाप्रदीपोद्द्योत-पदमञ्जरीशब्देन्दुशेखरमञ्जूषादिग्रन्थेषु शब्दार्थो बौद्ध इति प्रतिपादितम् । प्रमाणशास्त्रपरम्परायां न्यायसूत्रभाष्यन्यायमञ्जरीन्यायसारन्यायभूषण-तात्पर्यटीकान्यायकौस्तुभशाब्दतरङ्गिणीप्रभृतिग्रन्थेषु शब्दार्थो बाह्य एवेति निर्णीतम् । एवमेव वाक्यशास्त्रपरम्परायां मीमांसाश्लोकवार्त्तिकादिग्रन्थेषु शब्दार्थस्य बाह्यत्वमेव स्पष्टीकृतम् । अत्र केषां पक्षः सर्वैर्निर्विवादं स्वीकर्त्तव्य इत्यस्यैव समर्थने युक्तायुक्तत्वसमीक्षाऽस्माभिः प्रदर्शिता ।

बौद्धार्थवादस्य व्याकरणतन्त्रे प्रवेशकारयितॄणां भर्तृहरीणाम्मते घटादीनामखिलानामेव पदार्थानां द्विविधा सत्ता, बौद्धा बाह्या च । तत्र घटपटादिपदानां बौद्धसत्ताविशिष्ट एव शक्तिः, न तु बाह्यसत्ताविशिष्टे । तथा सति घट इत्यनेनैव घटे बाह्यसत्ताप्रतीतिसम्भवात् तदुत्तरं प्रयुज्यमान-स्यास्तीत्यस्य वैयर्थ्यं स्यात्, घटो नास्ति, इत्यस्याप्रामाण्यापत्तिश्च, सत्तातदभावयोरेकत्र विरोधात् । बौद्धसत्ताविशिष्टस्य घटादेर्घटादिवाच्यत्वे तु घटोऽस्तीत्यत्रास्तिपदेन बाह्यसत्ता, घटो भविता, घट आसीदित्यादिव्यावृता वर्तमानकालीना बोध्यत इति तस्य सार्थक्यम्, घटो नास्तीत्यादेरपि वर्तमानकालिकबाह्यसत्ताभावस्य घटे बोधकत्वादेव प्रामाण्यमुपपद्यते । एवञ्च शशशृङ्गादिपदेषु बाह्यसत्ताविरहेऽपि न क्षतिः, तद्वाच्यस्य बौद्धसत्ताविशिष्टस्यैव ग्रहणात् । शशशृङ्गादिपदार्थानां बौद्धिकी सत्ताऽपि नास्ति, प्रमाणाभावादिति तु न वक्तव्यम्, यतो हि शशशृङ्गपदेनार्थस्य सत्ता न स्यात्, तर्हि तद्विषयको बोधोऽपि न स्यात्, किन्तु शशशृङ्गादिशब्दैस्तदर्थविषयकबोधो जायते, अतस्तस्य बौद्धसत्तावश्यमेव स्वीकर्त्तव्येति भर्तृहर्य्यादिबौद्धार्थवादिमताशयः । इदमत्रावधेयम्, अत्रार्थस्य सत्तायाः द्वैविध्यकल्पनमद्वैतवेदान्तदृष्ट्यैव, न व्याकरणशास्त्रदृष्ट्या । तस्माद् भर्तृहरिमतं शब्दाद्वैतवाद इति पर्यायेणापि न्यायमीमांसादिग्रन्थेषु गृहीतम् ।

परञ्च भर्तृहरिप्रतिपादितमुपचारसत्ताविषयकं मतं व्याकरणपरम्परायां प्रमाणभूतैर्भट्टोजिदीक्षितकौण्डभट्टादिभिरस्वीकृतम्, तेषाम्मतेऽर्थो बाह्य एव । इह प्रमाणत्वेन भट्टोजिदीक्षितस्य वैयाकरणमतोन्मज्जनग्रन्थस्य कारिका तद्व्याख्यानञ्च समुपस्थाप्यते—

सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः ।

धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ्॥ बृहद्भूषणे सारे च धात्वर्थे ८,१६,

अत्रेदमवधेयमियं कारिकाऽर्थस्य बाह्यत्वमधिकृत्यैव लिखिता । इमां कारिकां व्याचक्षाणः श्रीकौण्डभट्टस्तत्रैवार्थस्य बाह्यत्वं स्वीकृत्य- ''असमस्तनञ्'' इत्यंशमेवं व्याचख्यौ- ''समासायोग्यः प्रसज्यप्रतिषेधीयो नञित्यर्थः । उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षेऽसमस्तत्वाद् यथा श्रुतग्रहणायोगात् । न चासमस्तनञः क्रियान्वये मानाभावः । न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते, इत्यादौ क्रियाया एव निषेधप्रतीतेः । अत एव विद्यमानेऽपि घटे तादृशप्रयोगः । तथा च घटो नास्तीत्यत्राप्यस्तित्वाभाव एव बोध्यते'' इति । अत्र न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते, इत्यादिप्रयोगेषु त्वमित्यादिकारकरूपस्यार्थस्य बाह्यस्य सत्त्वेऽपि क्रियाया एव निषेध उच्यते । अत एवाहुः ''विद्यमानेऽपि घटे तथा प्रयोगः'' । अयं भावः- घटो न जायते, चैत्रो न पचतीत्यत्र चैत्रघटयोरर्थयोर्बाह्ययोः सत्त्वेऽपि पचिजनिक्रिययोरेव निषेधार्थं तथा प्रयोगः । इतश्च घटो नास्तीत्यत्र घटरूपबाह्यार्थस्य सत्त्वेऽप्यस्तिक्रियाभाव तत्र बोध्यते, न तु घटाभावः, नञर्थस्य घटेनान्वयाद् घटपदार्थस्य बाह्यसत्ता न निषिध्यत इति भूषणकृतामाशयः ।

न तु बौद्धघटपदार्थं स्वीकृत्य तदभावो घटो नास्तीति वाक्येन बोध्यत इति ग्रन्थयोजना कथमपि सङ्गच्छते, तादृशयोजनयाऽसमस्तनञो घटपदार्थेनान्वयादपव्याख्यानत्वापत्तेः । असमस्तनञः प्रसज्यप्रतिषेधीयस्य क्रियायामेवान्वयस्य विवक्षितत्वात् । एवञ्च घटो नास्तीत्यत्र घटत्वावच्छिन्नपदार्थस्य स्वार्थव्यक्तित्वेन बाह्यार्थेन सह नास्तिक्रियाया निषेधो न, प्रत्युत यः कर्त्तृत्वरूपोऽर्थः निषिध्यते, न तु स्वार्थरूपसत्तार्थो निषिध्यते । एवमर्थस्य बाह्यत्वस्वीकारे न कोऽपि दोषः । न च पदार्थो सत्तां व्यभिचरतीति भाष्यविरोधः । घटो नास्तीत्यत्र घटत्वसत्तारूपार्थस्य निषेधाभावात्, अस्तिक्रियाया एव निषेधात् । अथ चास्तिक्रियाश्रयस्य घटनिष्ठकर्तृरूपार्थस्य निषेधात्, न ह्यव्यभिचरितसत्ताकघटत्वविशिष्टघटरूपार्थस्य निषेधे तात्पर्यम् । अत एव वृक्षोऽस्ति, वृक्षो नास्तीत्यादिभाष्यप्रयोगेष्वप्यर्थस्य बाह्यत्वस्वीकारे न दोषलेशोऽपि दृश्यते । न तु तत्राव्यभिचरितसत्ताकघटरूपार्थस्य निषेधे तात्पर्यम्, प्रत्युत अस्तिक्रियानिषेधोऽभावो वा बोध्यते, तथात्वे

चास्तिक्रियाश्रयरूपः कर्त्तृत्वार्थो निषेधरूपोऽर्थस्तु आर्थिकोऽर्थः, न तेन बाह्यार्थघटस्य यद्वा बौद्धार्थघटस्य कथमपि निषेधो बोध्यते, अनया वैयाकरणभूषणरीत्यार्थस्य बाह्यत्वस्वीकारेणैवाभीष्टसिद्धेः, न तु बौद्धार्थस्वीकारे शाब्दिकानां प्रयोजनं पश्यामः । बौद्धार्थवादिनस्तु स्वसिद्धान्तरक्षार्थं भाष्यमन्यथा योजयन्तीति विभावयन्तु सज्जनाः सुधियः ।

अत एव प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावः कल्पितः, न त्वाख्यातार्थकर्त्रभिन्नप्रथमान्तपदजन्योपस्थितिर्हेतुरिति कारणं कल्पितम्, उक्तकार्यकारणभावेन वृक्षो नास्तीत्यत्र वृक्षरूपार्थस्य बाह्यसत्तास्वीकारेऽपि नास्तीति प्रयोगे न कोऽपि दोष इत्यलं पल्लवितेन, प्रकृतमनुसरामि । बौद्धार्थवादस्य मूलबीजं प्रथमतो व्याकरणपरम्परायां वाक्यपदीये समुपलभ्यते, तत्र वैयाकरणहरिणा भर्तृहरिणोपचारसत्तेति नाम्नाऽयं वादः प्रपञ्चितः । परञ्च तत्र बाह्यार्थोऽपि मुख्यसत्तेति नाम्ना स्वीकृत एव । यत्र यत्र वाक्यपदीये बाह्यार्थस्य चर्चा तत्र तत्र तट्टीकाकारा हेलाराजादयो बौद्धार्थ एव शाब्दिकसिद्धान्त इति वासनावासितान्तःकरणा भ्रामकं व्याख्यानं कुर्वन्ति । ते च बाह्यार्थस्य प्रत्याख्यानाय प्रयतन्ते । तथैव शाब्दिकशार्दूलेनोपाध्यायकैयटेन नागेशेन च महाभाष्यव्याख्याने बाह्यार्थस्य खण्डने बौद्धार्थस्य मुनित्रयसम्मतत्वसाधने च सर्वत्र प्रयासः कृतः । भट्टनागेशेनोद्द्योते स्पष्टमुक्तम्- "बाह्यार्थो न शाब्दबोधस्य विषयः" । इदं नागेशप्रातिपादितमतमेव बौद्धार्थवाद इति नाम्ना प्रबन्धे गृहीतः प्रत्याख्यातश्च । न च बुद्धिविषयतायाः खण्डनमस्माकमभिप्रेतम् । अस्य नागेशप्रतिपादितबौद्धार्थस्य प्रत्याख्याने चत्वारो हेतवो विशेषतः सप्रमाणं साधिताः ।

१. बौद्धार्थवादो न समञ्जसो मुनित्रयशास्त्रेऽसिद्धत्वात् ।

२. अन्यैरपि भट्टोजिदीक्षितकौण्डभट्टन्यासकारादिभिर्वैयाकरणैरस्वीकारात् ।

३. युक्तिविरुद्धत्वात् ।

४. नैयायिकमीमांसककृतप्रत्याख्यानाच्चेति ।

बौद्धार्थबाह्यार्थपर्यालोचनमित्याख्ये प्रबन्धेऽस्मिन् शब्दशास्त्रीयपरम्परामनुसृत्यैतिहासिकक्रमेण सप्तस्वध्यायेषु प्रकृतविषयस्य विवेचनं यथामति यथाविचारं यथाधीतं यथोपलब्धं सरलया संक्षिप्तया भाषया सयुक्तिकं निरूपितम् ।

प्रथमपर्यालोचने शब्दार्थो बौद्ध इति पूर्वपक्षं संस्थाप्य महर्षिपाणिनिमतेनार्थस्य स्वरूपं विचार्य, तत्र पाणिनिसम्मतो बाह्य एवार्थ इति तेषां सूत्राणां विवेचनेन प्रमाणितम् । तथा च न्यायव्याकरणमते शशृङ्गादिपदानां प्रातिपदिकत्वसिद्धये बौद्धार्थो नाङ्गीकार्य इत्यपि विवेचितम् ।

भट्टनागेशपादैर्यत्र क्वचिच्छशशृङ्गादौ प्रातिपदिकसंज्ञासिद्धये बौद्धार्थस्य क्लिष्टकल्पना कृता, सा कथमपि न विचारसहा, प्रत्युत नैयायिकमतेन शशशृङ्गादिपदानां बाह्यार्थस्याभावेऽपि बाह्यजगत्यकेत्र शशो दृष्टः, अन्यत्र बाह्य एव जगति गवादिषु शृङ्गम्, उभयं बुद्धिविषयमेकीकृत्य विशिष्टार्थप्रतिपादनाय विशिष्टार्थलक्षकं शशशृङ्गादिपदं स्वीकृत्य प्रातिपदिकसंज्ञा निर्बाधा सिध्यति । यद्वा महावैयाकरणकौण्डभट्टदर्शितरीत्या शकत्यैव प्रातिपादिकसंज्ञायाः सम्भवाद् बौद्धार्थस्य बौद्धशब्दस्य वा न कथमपि कल्पना करणीया भवति ।

यद्यपि वाक्यपदीय उपचारसत्ता भर्तृहरिणोक्ता, किञ्चास्मन्मते न सा व्याकरणशास्त्रानुसारेणाष्टाध्याय्यां स्वीकृता । पाणिनिमतेनार्थस्वरूपं बाह्यमेवेति निरूप्य तत्रैव कानिचित् पाणिनिसूत्राणि सविवरणानि समुद्धृतानि । तैः सूत्रैर्लोकत एव बाह्यजगति बाह्यार्थवाचका एव शब्दाः, अतः शब्दा अर्थाश्च बाह्या एव पाणिनेरभीष्टा आसन्निति बौद्धार्थपक्षं समालोचयद्भिरस्माभिः संक्षेपत एव प्रतिपादितम् ।

द्वितीयपर्यालोचने भगवतो महाभाष्यकारस्य बाह्यार्थोऽभिमतो बौद्धार्थोऽनभिमतश्चेति तर्केरुद्धरणैर्लोकप्रमाणैश्च सिद्धान्तितम् । बौद्धार्थवादिभिः शाब्दबोधस्य यो विषयो निरूपितस्तस्य खण्डनं विधाय त्रिमुनिसम्मतो लोकप्रमाणसिद्धो बाह्य एवार्थ इति सम्पुष्य महाभाष्याश्रितानां बौद्धार्थवादिनां युक्तीनां समीक्षणं विधाय महाभाष्यकारस्य न कुत्रापि बौद्धार्थेऽभिरुचिरित्यपि प्रस्तुतम् । भगवद्भाष्यकारमते बाह्यार्थ एव वास्तविकः । शब्दार्थानुशासनप्रक्रियायां न बौद्धार्थ इत्यत्र तत्तत्स्थलीयभाष्योद्धरणैर्बौद्धार्थं प्रत्याख्याय बाह्यार्थ एव भाष्याशय इति प्रतिपादितम् ।

तृतीयपर्यालोचने तु वाक्यपदीयमाधारीकृत्य भर्तृहरिसम्मतः शब्दार्थयोः कार्यकारणभावादिसम्बन्धोऽर्थस्य सत्ताद्वयञ्च विचारितम् । तत्रैवाङ्कुरो जायते, वृक्षोऽस्ति, वृक्षो नास्ति, इत्यादयः प्रयोगा अर्थस्योपचारसत्तास्वीकारं

विना न भवितुमर्हन्तीति बौद्धार्थवादिनां भर्तृहर्यादीनां मतं प्रत्याख्यातम् । अङ्कुरो जायते, इति प्रयोगानां बाह्यार्थसत्तास्वीकारेणाऽपि साधुता सिध्यति प्रयोगाश्च सङ्गच्छन्ते । तस्माद् वैयाकरणैर्नैयायिकैश्चोपचारसत्ता न स्वीकरणीयेति सविस्तरं निरूपितम् ।

तुरीयपर्यालोचने हेलाराजसमर्थितबौद्धार्थवादस्य निरासः कृतः । तथा च मञ्जूषायां प्रदीपोद्द्योतयोश्च यद्यत्सूत्रभाष्यं बौद्धार्थसाधकत्वेन समुपन्यस्तं, तत्तद्भाष्यविवरणपूर्वकं तत्तत्सूत्रभाष्येण न कथमपि बौद्धार्थसिद्धिर्भवति, प्रत्युत भाष्यप्रतिपाद्यविषयं दूरे विहाय स्वाभीष्टबौद्धार्थसाधकतयान्यथा व्याचक्षाणाः कैयटनागेशादयः प्रत्याख्याताः । तथा च भर्तृहरिस्वीकृतोपचारसत्ता न व्याकरणशास्त्रविषयिणी, इत्यत एव प्रमाणभूतैर्भट्टोजिदीक्षितैः शब्दार्थविचारे न क्वापि नामतोऽप्युक्ता । कौण्डभट्टेन तु बृहद्वैयाकरणभूषणे सारे च शशशृङ्गादीनामुपचारसत्तास्वीकारं विनैव प्रातिपदिकत्वं दर्शितम् । अतो बौद्धार्थसत्ता (उपचारसत्ता) न मुनित्रयसम्मता, न च तद्व्याख्यातृसम्मतेत्यप्युक्तम् । तत्र काशिकान्यासयोरपि न क्वाप्युपचारसत्ताङ्गीकृता । अतः प्रकरणवशाच्छास्त्रान्तरीयसिद्धान्तेष्वपि वैयाकरणानां प्रवेशाय भर्तृहरिणा स्वीकृतोपचारसत्ता न व्याकरणशास्त्रोपयोगिनीति सुतरां साधितम् । हेलाराजकैयटनागेशादयस्तु शास्त्रान्तरीयवासनयाऽथवा व्याकरण एव सर्वे शास्त्रान्तरीयविषयाः सन्निविष्टा इति प्रौढ्या साधयितुमुपचारसत्तां स्वीकुर्वाणा दृश्यन्ते । किञ्च नैतन्न्याय्यम् । तथा च बाह्यपदार्थस्यातीतानागतकालेषु बुद्धिविषयत्वलक्षणसम्बन्धेन बुद्ध्यारूढानां बाह्यार्थानामेव घटपटादीनां ग्रहणं वर्तते, तत्तद्देशकालानुसारं बाह्यपदार्थानां प्रयोगकाले सत्तावश्यकी नास्ति । बुद्धिविषयतयैव वर्तमानकालादिषु 'अस्ति, नास्ति, आसीत्, भविष्यति' इत्यादयः प्रयोगाः सुतरां सिध्यन्ति । अतो व्याकरणन्यायदृष्ट्या बौद्धसत्ता न कल्पनीयेति निर्णीतमस्माभिः ।

पञ्चमपर्यालोचने श्रीमता नागेशभट्टेन मञ्जूषायां शब्दार्थौ बौद्धावेवेति भूयः प्रपञ्चितम् । तत्सर्वं शास्त्रान्तरवासनाफलम् । न शब्दार्थौ बौद्धाविति कथमपि सिध्यतीत्युक्तम् । तथा चोपचारसत्तां विना न पदार्थः सत्तां व्यभिचरतीति सिद्धान्तानुसारं वृक्षोऽस्ति, वृक्षो नास्तीति प्रयोगौ न सङ्गच्छतः, बाह्यसत्तायां स्वीकृतायां वृक्ष इत्यत्र बाह्यजगति वृक्षस्यास्तित्वमस्त्येवेति, अस्तिक्रियाप्रयोगो न सङ्गच्छते । बाह्यजगति वृक्षस्य सत्तायां सत्यां, वृक्षो

नास्तीति प्रयोगः सुतरामसङ्गतो भवति । अतोऽर्थानामुपचारसत्तास्वीकारेणैव वृक्षोऽस्ति, वृक्षो नास्ति, इति प्रयोगौ सङ्गच्छत इति कैयटनागेशयोः कथनं तर्काद्दूरापेतम् । वस्तुतो बाह्यजगति सत्यस्य वृक्षस्य तत्तद्दैशिककालिकसम्बन्धाभ्यां वृक्षोऽस्ति, नास्तीति प्रयोगौ सुतरां सङ्गच्छतः । अत्रैव नञस्तत्तद्देशकालयोर्निषेधे तात्पर्यं न निर्दिश्यमानस्य निषिध्यमानस्य सर्वत्रात्यन्ताभावे तात्पर्यमित्यपि व्यक्तमुपपादितम् । प्रसङ्गवशाद् बौद्धार्थसत्ताखण्डनाय प्रमाणभूतं नैयायिकमतं समुपन्यस्तं, यथा हि शाब्दतरङ्गिण्यां सुस्पष्टमेव बौद्धार्थस्य खण्डनं कृतमस्ति । तद्यथावदुद्धृत्य बौद्धार्थः शब्दाद्वैतवादिभिर्भर्तृहरिकैयटनागेशादिभिः बुद्धिप्रकल्पितो मिथ्यैव न तु वास्तविक इति साधितम् । बौद्धार्थास्वीकारेऽपि व्याकरणशास्त्रे न कोऽपि दोषः समापततीत्यतो बाह्यार्थेनैवाभीष्टसिद्धौ बौद्धार्थकल्पना निरर्थिकेति विविधैः प्रमाणैर्बौद्धार्थः प्रत्याख्यातः । न्याययोगवेदान्तसूत्रभाष्येणापि नागेशस्य मनोरथः खण्डित इत्यपि निरूपितम् ।

षष्ठे पर्यालोचने न्यायपरम्परामवलम्ब्य शब्दार्थयोः सम्बन्धविचारो बौद्धार्थखण्डनञ्च विधाय मीमांसकभट्टकुमारिलमतेन भर्तृहरिसिद्धान्तितशब्दाभेदवादस्याध्यासस्य च प्रत्याख्यानं निर्दर्शितम् । तदनु तार्किकवरैर्जयन्तभट्टैः युक्तिपूर्णं मीमांसकमतसमर्थनं समुपन्यस्तम् । यथार्थवादितार्किकमीमांसकानां पक्षो न्याय्यो युक्तिसिद्धः, तथा च बौद्धार्थस्यानुपयुक्तत्वमुक्तम् । उपचारसत्ताखण्डने तर्ककौतूहलादिग्रन्थानामुद्धरणानि सविशेषं विचारणीयानि सन्ति ।

सप्तमे पर्यालोचने शोधप्रबन्धस्य निष्कर्षः समासेन समाकलितः । प्रकृतसमस्यायाः समाधानेऽस्माकं प्रयासोऽयमत्र, उपाचारसत्तया विनापि सम्प्रतिसत्ता, भूतसत्ता, अनागतसत्तेति भाष्यकारपतञ्जलिप्रतिपादितसत्ताश्रयेण शास्त्रप्रक्रिया सम्भवति, परोक्षस्थले बुद्धिविषयतयैव निर्वाहः कर्त्तव्यः । पूर्वोक्ताध्यायेषु बाह्यार्थं विना न प्रक्रिया निर्वाहः संभवतीति निरूपितमेव, तथा चास्वीकृतायामुपचारसत्तायां प्रक्रियानिर्वाहः सम्भवति । तदास्माकं प्रतिपादितरीत्या केवलेन बाह्यार्थेन व्यवहारसिद्धिरतो लाघवात् स एवाङ्गीकार्यः । अतः कौण्डभट्टादीनामनुसृतो बाह्य एवार्थ इति वैयाकरणमार्गः सर्वैर्निर्मत्सरैः सुधीभिः समर्थनीय इति समुट्टङ्कितम् ।

राजस्थानविश्वविद्यालये विश्वविद्यालयानुदानायोगस्य शोधछात्रवृत्तिसाक्षात्कारे यदाहं गतवान्, तदानीं तत्रोपस्थितेषु विश्वविद्यालयीयाचार्येषु प्रख्यातैः श्रीरामचन्द्रद्विवेदिमहाभागैः स्वकरस्थमुष्णपेयपात्रं प्रदर्शयद्भिर्मम समक्षे प्रश्नोऽयं समुपस्थापितः –इदमुष्णपेयपात्रमस्त्यत्र शब्दतत्त्वविदां नये कः शब्दः कश्चार्थः ? तदाऽस्य प्रश्नस्योत्तर स्थले मया-'यस्यात्र श्रावणं प्रत्यक्षं स शब्दः, यस्य च चाक्षुषं प्रत्यक्षं सोऽर्थः' इति सामान्यलक्षणमेव सुनिरूपितम् । मदुत्तरे श्रुते मत्प्रदर्शितलक्षणं समीचीनमसमीचीनं वेति विषयमादाय तत्रस्थेषु शास्त्रवित्सु विवादो जातः । ये च तत्र वस्तुसत्तावादिनो दार्शनिकाः शाब्दिकास्तार्किकाः मीमांसकाश्चासन्, ते मदुत्तरेण सन्तुष्यन्तः मत्पक्षः समीचीन इत्यवोचन् । ये च तत्र विज्ञानवादिनोऽद्वैतवादिनः शाब्दिका वा मत्पक्षप्रत्याख्याने भट्टनागेशग्रन्थस्य प्रामाण्येनावोचन्-न च शब्दविदां नये बाह्योऽर्थः, प्रमाणभूतेन नागेशभट्टेन लघुमञ्जूषायां बौद्धः शब्दो बौद्धश्चार्थ इत्येव शाब्दिकसिद्धान्तो निर्णीतः । परञ्च तत्रत्या दार्शनिकप्रवराः श्रीविश्वम्भरपहिमहोदयाः प्रोचुः –बौद्धार्थविषयकभर्तृहरिनागेशमतं न तर्कसम्मतं, न मुनित्रयसम्मतं, न च शब्दशास्त्रसम्मतं तच्चाद्वैतवासनावद्दूषितम् । तदेवोत्पन्ना बौद्धार्थविषयिका जिज्ञासास्य प्रबन्धस्य प्रवृतौ बीजम् ।

तदनन्तरं दर्शनविभागस्याचार्यपहिमहोदयस्य निर्देशने शोधकार्यं विधातुं कुलपतिमहोदय च विशेषानुमतौ प्राप्तायाम्, उपलब्धायाञ्च विश्वविद्यालयानुदानायोगशोधछात्रवृत्तौ शोधदृष्ट्या नवीने व्यापके दुस्तरे शास्त्रीये गहने विषयेऽस्मिन्नहं प्रवृत्तः, इदमेव निमित्तमस्य शोधप्रबन्धस्य ।

यद्यप्यस्मिन् विद्यावैभवविहीने भारतीयशास्त्रपठनपाठनपरम्परा क्षीणे कलिकाले कराले शुष्कं खण्डनमण्डनात्मकं गहनशास्त्रीयविषयमधिगृह्याहं दुःसाहसमेवाकार्षम्, किन्तु गुरोरसीमयानुकम्पयाकम्पया सर्वं सुकरं सरसं सम्पन्नञ्च सञ्जातम् । न्यायमीमांसाव्याकरणादिशास्त्राणां सूक्ष्मतत्त्वविवेचके मम शोधकार्ये प्रवृत्तावपि प्रातः स्मरणीयगुरुचरणैरुत्साहवर्धनमेव हेतुः । अतस्तेषां प्रायः द्वादशवर्षाणि अमेरिकादेशे पाश्चात्यगाणितीयतर्कशास्त्रस्य समग्रस्य पठनं पाठनञ्च विधाय स्वदेशमागत्याधिजयपुरं राजस्थानविश्वविद्यालयदर्शनविभागे आचार्यपदमलङ्कुर्वतां तर्कशास्त्रे कृतभूरिपरिश्रमाणां गाणितीयतर्कशास्त्रेऽनेकनूतनतर्कशास्त्रीयपद्धतेराविष्कर्तॄणां

न्यायप्रियाणामकारणकरुणावतां न्यायवैशेषिकव्याकरणादिषु प्राच्यप्रतीच्योभयविधदर्शनशास्त्रेषु च निष्णातानां विश्वम्भरपहिमहोदयानां चरणयोः सश्रद्धं प्रणामाञ्जलीन् भूयो भूयो वितरामि।

ऋषिकल्पान् पं. स्व. श्रीसूर्य्यनारायण झा, प्रो. रामचन्द्र द्विवेदी, पं. श्रीनागनाथमिश्रप्रभृतीन् शास्त्रप्रवेशकान् गुरूनपि अविस्मरन् सादरं सश्रद्धं पुनः पुनः प्रणमामि, येषां कृपाकटाक्षेण मम विद्याशरीरं दीक्षाशरीरञ्च जीवति। येषां श्रीचरणानां समीपे मयाऽनेकग्रन्थाः पठिताः, समये समये च मां झटिति कार्यकरणार्थमुत्साहितवन्तो बौद्धार्थखण्डने वैयाकरणनयेनानेकविशिष्टयुक्तीनां विवेचनञ्च विधाय मय्यसीमकृपावन्तस्तान् पदवाक्यप्रमाणज्ञान् झुन्झूनूमण्डलान्तर्गतप्रपूर्णाग्रामे निम्बार्कशोधसंस्थानस्य सञ्चालकान् श्रीगुरुवरान् पण्डितबदरिप्रसादात्रैयमहाशयान् सादरं पुनः पुनः प्रणमामि, तेषामाभारं सादरं शिरसा वहामि। जयपुरस्थकेन्द्रीयसंस्कृतविद्यापीठे प्रवाचका डॉ. हिन्दकेशरिमहाभागाः शोधलेखने संशोधने च सर्वात्मना सहयोगं कृतवन्तः, अतस्तेभ्य उपकृतीर्धारयामि।

अस्मत्पितुः पं. श्रीगजानन्दशर्मणः, मातुः श्रीमत्याः पार्वतीदेव्याः कठिने शोधकार्येस्मिन् प्रतिपदं प्रेरणयोपकृतोहं संशोधने संस्कृतोऽहं पुनः पुनः शुभाशीःकामनया तेषां चरणकमलेषु प्रणमामि।

गवेषणाप्रबन्धस्यास्य लेखनाय शोधछात्रवृत्तिं प्रकाशनाय वैत्तिकं साहाय्यकं विश्वविद्यालयानुदानायोगेन अर्पितमिति तत्रत्यान् अधिकारिणः साधुवादैः सभाजयामि।

इमं प्रबन्धं राजस्थानविश्वविद्यालयभारतीयदर्शनाध्ययनमालायां प्रकाशनाय स्वीकृत्य दर्शनविभागस्य विशेषसहायताकार्यक्रमस्य निदेशकमहोदयेन महोपकारः कृतः, यस्मादयं पाठकानां पुरस्तात् प्रस्तुतो भवति।

पुनश्च महत्यस्मिन् कार्ये येषां येषां ज्ञानप्रदानां गुरूणां ग्रन्थकर्तॄणां ग्रन्थशरीरेणाहं यथा तथा समुपकृतस्तेभ्योऽपि सर्वेभ्यो हार्दिकानाभारान् प्रयच्छन् कृतज्ञतामधमर्णतां च विज्ञापयन् ते आचार्या मयि स्वसामर्थ्यांशं प्रदाय कृतार्थयन्त्विति प्रार्थयामि।

यद्यपि सावहितेन मयायं शोधप्रबन्धः संशोधितः, किन्तु नैसर्गिकमानवस्वभावमूलकमदनवधानविविधव्यवधानादितो ग्रन्थेऽस्मिन् टङ्कणादिदोषप्रयुक्ता जाताश्चेदशुद्धयो गच्छतः स्खलनमिति न्यायमादाय सन्तुष्यद्भिः सद्भिः क्षम्येरन्निति पराऽशेषक्लेशधारिणां गुणग्राहिणां संस्कृतजुषां विदुषां सविधे सानुनयं निवेदनमिति ।

पुनश्चान्ते गहनतमस्य खण्डनमण्डनात्मकस्यास्याल्पज्ञेन मयका गवेषणं सर्वथा दुष्करमेवेति विजानतापि शास्त्राध्ययनजिज्ञासया यदत्र साहसिक्यं व्यधायि, यानि चात्र मे स्खलितानि, मम प्रमादादज्ञानाद्वा स्वल्पबुद्धित्वाद्वा, तानि सर्वाण्यपि क्षन्तव्यानि करुणाकोमलान्तःकरणैः क्षमामण्डितैः पण्डितैः । अस्य क्षणमप्यवहितमनसा समवलोकनेन सफलयन्तु च मे श्रममिति बारं बारं सम्प्रार्थ्याखिललोकनायकस्य भूतभावनाशुतोषस्य वल्लभाया भगवत्याः परम्बायाश्चरणकमलयोर्मनःकल्पितसुमनोभिः समभ्यर्च्य स्तुतिञ्च कलयन् विरमामि ।

तव च का किल न स्तुतिरम्बिके ।
सकलशब्दमयी किल ते तनुः ।
निखिलमूर्तिषु मे भवदन्वयो ।
मनसिजासु बहिःप्रसरासु च ॥ (अभिनवगुप्तः)

विदुषां चरणचञ्चरीकः
राजेन्द्रप्रसादशर्मा
प्राध्यापकः,
विशेषसहायताकार्यक्रमे
राजस्थानविश्वविद्यालयदर्शनविभागे
जयपुरम्

## प्रथमं पर्यालोचनम्

# पाणिनिसूत्राश्रितबौद्धार्थबाह्यार्थसाधक-युक्तीनां समीक्षा

अथ महर्षिपाणिनिसूत्राश्रितानां बौद्धार्थसाधिकानां बाह्यार्थसाधिकानां वा युक्तीनां पर्यालोचनार्थं समुपस्थापनमिह क्रियते ।

### १. अर्थस्य बौद्धसत्ता मुख्यसत्ता वेति विवादविषये प्रवेशः

व्याकरणं खलु शब्दसाधुत्वव्यवस्थापकं शास्त्रम् । तथापि तस्य सर्वासु शाखास्वर्थस्यैव प्राधान्यमित्यसंदिग्धम् । वर्णविज्ञाने, पदविज्ञाने, वाक्यविज्ञाने, ध्वनिविज्ञाने च यथा वैयाकरणानां वैमत्यं परिदृश्यते, तथैवार्थविज्ञानेऽपि वैयाकरणानां तार्किकमीमांसकालङ्कारिकैः सह विवादो वर्तत एव । तेष्वर्थसत्ताविषयकविवाद एव समालोच्यतेऽत्र । शब्दार्थयोः किं स्वरूपम् ? तयोः परस्पर कः सम्बन्धः ? अर्थो घटपटात्मको बाह्य आहोस्विद् बुद्धिरूपाधिकरणस्थो बौद्ध इति विचारणीयाः प्रश्नाः ।

लोके शब्दार्थज्ञानानामभेदेन प्रतीतिः समुपलभ्यते, यथा दीपः स्वप्रकाशमात्मसमीपस्थपदार्थांश्च प्रत्यक्षरूपेण ग्राहयति, तथैव प्रत्येकं शब्दः स्वरूपं ज्ञानं स्वार्थञ्च प्रकाशयति । शब्दार्थज्ञानानाम्परस्परभेदे सत्यपि नित्यसहचारित्वादभेदाध्यवसायाच्च तेष्वेकत्वप्रतीतिः । यदा कश्चिद् वक्ता वदति –'सीतारामं पठ' तत्र तु वक्तृतात्पर्यं शब्दे, 'सीताराममानय' तर्हि व्यक्तिविशेषेऽर्थे तत्तात्पर्यम्, यदा तु 'मनसि मे सीतारामः, ज्ञातो मया

सीतारामः' तदा तु तदभिप्रायो ज्ञाने । तस्माद् लोकव्यवहार एषां पृथक्करणं कठिनम् । लोकेऽप्यशिक्षिताः मन आत्मा बुद्धिः प्राणाः, इत्यत्र भेदं कर्त्तुं न शक्नुवन्ति । महर्षिपतञ्जलिना योगसूत्रे (३/१७) प्रमाणितम् - ''शब्दार्थ-प्रत्ययानामितरेतराध्यासात् सङ्करः, तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्'' । तत्र ''गौरितिशब्दो गौरित्यर्थो गौरितिज्ञानम्, य एषां प्रविभागज्ञः स सर्ववित्'' इति योगसूत्रभाष्यकाराः(३/१७)'। एवञ्च लिप्या सह तेषां त्रयाणामभेदोऽपि सिद्धः । अतः सीतारामं लिख इति वाक्यप्रयोगः सूपपन्नः । परञ्च नैतेषामभेदग्रहो वास्तविकः । शब्दाद्वैतदृष्ट्या विचार्यते चेत्, तदा तु न शब्दार्थज्ञानानामपि तु सर्वेषां वस्तूनां परस्परमभेदः सिद्धो वेत्स्यते । तच्चिन्ता दार्शनिकानां, न हि वैयाकरणानामेतत् क्षेत्रम् । महर्षिपाणिनिना शब्दार्थयोरभेदं स्वीकृत्य ''वृद्धिरादैच्'' (पा. १/१/१) इत्यादिषु सूत्रेषु संज्ञासंज्ञिनोः सामानाधिकरण्येन प्रथमायाः प्रयोगः समुपन्यस्तः ।

प्रतीतपदार्थकध्वनिः शब्दः, अर्थस्तु ज्ञानविषयः । घट इति शब्दे घकारोत्तराकारस्तदुत्तरटकारस्तदुत्तराकारस्तदुत्तरो विसर्जनीय इति वर्णपञ्च-कानामनुक्रमविशेषः शब्द एष । स च सर्वत्र ध्वन्यात्मकः श्रोत्रेन्द्रियगाह्यः, अर्थस्तु प्रत्यक्षानुमानशब्दादिप्रमाणैर्गृह्यते । अर्थस्वरूपविषये भर्तृहरिपरवर्तिनां वैयाकरणानां वैमत्यं वरिवर्ति । केषाञ्चिच्छास्त्रविदां नयेऽर्थो बौद्ध एव । तैरुच्यते-बाह्या लौकिकघटपटादयः पदार्था अर्थाश्चेत्, तर्हि तेन बाह्यार्थेन सह शब्दाभेदे सति मधु, इत्युक्ते माधुर्योपपत्तिः रासनप्रत्यक्षवत्, अग्निमानय इत्युक्ते दाहप्रतीतिः कथन्न ? अग्न्यानयन उष्णताया अनुभवो जायत एव । तथा चोक्तं भर्तृहरिपादैः-

अन्यथैवाग्निसम्बन्धाद् दाहं दग्धोऽभिमन्यते ।
अन्यथा दाहशब्देन दाहाद्यर्थः प्रतीयते ॥ वाक्यपदीयम् २/४२५,

अत्रेदं विचारणीयम्, मध्वग्निपदार्थाभ्यां प्राप्तप्रत्यक्षानुभवाद् मध्वग्निशब्दाभ्यां प्राप्तप्रत्यक्षानुभवस्तु भिन्नस्तर्हि कथं शब्दार्थयोरभेदः ? तस्मात् सिद्धं बाह्यार्थेन न शब्दस्य सम्बन्धः । विचित्रोऽयं तर्कः । न हि मोदकस्याघ्राणेन स्पर्शनेन वा क्षुन्निवृत्तिः, भुक्तमोदकेनैव क्षुधाशान्तिः, न हि, अग्नेर्दर्शनेन प्रदाहः, स्पृष्टोऽग्निरेव दहति, तथैव श्रुतप्रतीतार्थेनाऽपि न दाहादिकार्यम् । एवमेव शब्दार्थो यदि बाह्यः पदार्थस्तर्हि शशशृङ्गसदृशानां शब्दानाम्प्रयोगोऽपि न स्यात् । अत एव हेलाराजेनोक्तम् ''बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्यः ''इति वाक्यपदीये

सम्बन्धसमुद्देशे (३९) । वस्तुतो वाग्व्यवहारे शशशृङ्गसदृशा बहवःशब्दाःसन्ति, येषामुपलब्धिः कुत्रापि न दृश्यते । देवभूतपिशाचराक्षसगन्धर्वकिन्नरदेवदूतादयः कल्पनाप्रसूताः, शब्दाःसन्ति । एवं च सर्वकार-समाजवादसाम्यवाद-विश्वबन्धुत्वादिशब्दानामर्थस्योपलब्धिर्न प्रत्यक्षम् । हरिवृषभवृत्तौ (१/१४) प्राचीनाचार्यस्य (व्याडेः) बुद्धिगतशब्दार्थाभेदविषयकवचनमेकं सुनिरूपितम्—

अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः ।

शब्दस्तत्रार्थरूपात्मा सम्भेदमुपगच्छति ॥ वाक्यपदीयम् १/२६;

शब्दः क्रमरहितो यदा विभक्तध्वनिभिरभिव्यक्तः स एवार्थवाचकः । बुद्धौ शब्द एवार्थरूपो भूत्वा भिन्नतामुपगच्छति । अस्याशयस्तु बुद्धौ शब्दार्थौ तादात्म्यभावेन तिष्ठतस्तस्माद् बुद्धिगतेन शब्देनार्थप्रतीतिः । एवमेव हरिवृषभवृत्तौ दार्शनिकचिन्तनबहुलस्य संग्रहगन्थस्य वचनस्योपन्यासेन सिध्यति, न हि शब्दार्थयोर्वास्तविको भेदः, व्यवहारे तयोर्भेदोऽवकल्प्यते । शब्दार्थयोर्यस्तादात्म्यसम्बन्धः, स निश्चितः सिद्धश्च । यथा तत्र निगदितम्-

शब्दार्थयोरसम्भेदो व्यवहारे पृथक् क्रिया ।

यतः शब्दार्थयोस्तत्त्वमेकं तत्समवस्थितम् ॥ वाक्यपदीयं हरिवृषभवृत्तिः १/२६;

अतः शब्दस्य विवर्तोऽर्थ इत्यपि निष्पन्नम् । संग्रहकारमतमवलम्ब्य वाक्यपदीये (२/३१) भर्तृहरिणा - "एकस्यैवात्मनो भेदौ, शब्दार्थावपृथकस्थितौ" इत्यपि सादरमाकलितम् । अतो व्याडिभर्तृहरिमतेन शब्दार्थयोः वास्तविकोऽभेदः, व्यवहारदृष्ट्या भेदश्चेति सिद्धम् ।

आचार्यपञ्जलितः परवर्तिनो व्याकरणतत्त्वचिन्तनसरणिसंसक्ताः भर्तृहरिहेलाराजकैयटादयोऽर्थस्य मुख्यसत्ताम् (बाह्यपदार्थसत्तां) औपचारिकसत्तां (बौद्धपदार्थसत्तां) च स्वीकुर्वन्ति । किन्तु तन्त्रवासनावासितान्तःकरणेन भट्टनागेशेन केवलबौद्धसत्ताविष्टैः पदार्थैश्च व्यवहारसिद्धिरिति प्रतिपादयता बाह्यपदार्थसत्तावादः सर्वथाऽस्वीकृतः । अत एव भाषातत्त्वजिज्ञासूनाम्मानसे संशयो जागर्त्येवार्थस्य सत्ता पाणिन्यादिमुनित्रयेण कुत्र स्वीकृता ? किं सत्ता द्वयस्याश्रयणमुचितमथवैकस्या बौद्धसत्ताया आश्रयणमाहोस्विदेकस्या बाह्यसत्ताया एव, इत्यस्यामेव जिज्ञासायां समुपयोग्यतथ्यानामन्वेषणं तर्कपद्धत्या च विवेचनमिह कृतम् ।

अर्थस्योपचारसत्तासमाश्रयत्वसमर्थने भर्तृहरिणा वाक्यपदीये सम्बन्धसमुद्देशे, मुख्यसत्तासमाश्रयेण ये दोषा भवन्ति, तानुल्लिखतार्थस्योपचारसत्तैव समर्थिता । तत्र "न च सत्तां पदार्थो व्यभिचरति" इति भाष्यपङ्क्तिमुद्धृत्य स्वव्याख्यानकौशलेन पतञ्जलिमतेऽपि बौद्धसत्ता साधिता । यदुक्तम् -

तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम् ।
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम् ॥ वाक्यपदीये ३/३/४९;

एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते ।
सा च सम्प्रतिसत्तायाः पृथग्भाष्ये निदर्शिता ॥ वाक्यपदीये ३/३/५९;

अत्र व्याख्याने हेलाराजेन बौद्धसत्ताया अनिवार्यत्वं बाह्यसत्ताया अनावश्यकत्वञ्च प्रतिपादितम्- "एवं चानयैव सत्तया पूरिते व्यवहारे यद्यर्थक्रियाकारणादिना काष्ठबुसप्रायेण केनचिन्निबन्धनेनान्यसत्ता कल्प्यते, तद्वर्धतां सा, न तत्र चिन्ताऽस्माकम्, व्यवहारे तु तस्या नास्त्यनुप्रवेशः" इति (३/३/४०)

एवं च प्रदीपे मतुप्सूत्रे (५/२/९६) महावैयाकरणः कैयटो भर्तृहरिहेलाराजादिबौद्धार्थवादिनाम्मतस्य सारं समासेनाकलयति -"अथास्तिग्रहणमिति संभवे व्यभिचारे च विशेषणविशेष्यभावो भविष्यति, यथा नीलोत्पलमिति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणासंभवात्, तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः । सत्तायां प्रत्ययो यथा स्यादिति = सत्तायां वर्तमानात् सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । न सत्तामिति = यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावस्तस्माद् बुद्धिसमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायते, इति । अत्यन्ताऽसतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः, तस्माद् बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपतॄणां बहीरूपतयाऽवभासते । यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्, तदा वृक्ष इत्यतः सत्तावगमाद अस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्, नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाऽप्रसङ्गः । अङ्कुरो जायते इति च प्रयोगो न स्यात्, सतो जन्मविरोधात् । उपचारसत्तायां त्वेते दोषा नावतरन्ति । बुद्धिसत्तासमाविष्टस्य

बहिः सत्त्वासत्त्वजननप्रतिपादनायास्तिनास्तिजायत इति प्रयोगात्'' इति। परञ्च भट्टनागेशेन वैयाकरणसिद्धान्तलघुमञ्जूषायां (पृ.२३) नितरां पराकाष्ठामधिरूढपक्षोऽयं निराकृतः। तन्मतेन शब्दार्थयोरितरेतराध्यासमूलकं तादात्म्यम्, न वास्तविकम्। अध्यासो नाम अन्यस्मिन्नन्यधर्मावभासो शुक्तौ रजतत्वावभासः। तन्मूलकं यथा-इदंपदार्थरजतपदार्थयोस्तादात्म्यं तथा पदपदार्थयोरपि 'अयं घटः' इति तादात्म्यमध्यासमूलकमेव न तु वास्तविकम्। वास्तविकभेदविशिष्टारोपिताभेद एव तादात्म्यमिति भावः।

'कः शब्दः, कोऽर्थः' इति शब्दार्थविषयके द्विविधेऽपि प्रश्ने घट इत्ययं शब्दः, घट इत्ययमर्थ इति समानाकारोत्तरदर्शनेन शब्दार्थयोरध्याससिद्धिः। अन्यथेति शब्देन शब्दार्थाभ्यां 'घटः' इति वर्णचतुष्टयस्यभेदबोधो नोपपन्नः स्यात्। एवं घट इत्याकारकज्ञानस्य शब्दस्य चोक्तरीत्या अध्यासो, व्यवहारात्। श्रोत्रेन्द्रियस्य शब्दमात्रग्राहकत्वेन श्रावणप्रत्यक्षविषयताया अर्थेऽसम्भवेन 'पदं श्रुतमर्थं श्रुणु, अर्थं भाषते' इत्यादिप्रयोगाः लोके संगच्छन्ते। (वैयाकरणसिद्धान्तलघुमञ्जूषा पृ.३३)। अतस्तादात्म्यलक्षणन्तु तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् इति सुतरां घटते।

शब्दार्थयोस्तादात्म्येऽग्निशब्दोच्चारणे मुखदाहापत्तिरित्यपि न वाच्यम्। अध्यासमूलकस्य भेदविशिष्टाभेदस्य तादात्म्यरूपत्वाद् नात्रदाहः, अभेदस्याध्यस्तत्वात् (तत्रैव पृ.३४)। यथा तीरे गङ्गात्वारोपेऽपि न हि तत्र स्नानादिकार्यं जायते, तथैवात्रापि न मुखस्य दाहः सम्पद्यते। एतेनाध्यासलक्षणेन शब्दार्थयोरभेदे सत्यपि अग्न्यादिशब्दोच्चारणे मुखदाहाद्यापत्तिः, मधुरित्युक्ते माधुर्यग्रहणापत्तिश्चेति निरस्तम्। तस्मादेव लोके 'अयं सास्नादिमानर्थो गौः' इत्यर्थकात् 'अयं गौः' इत्येवं व्यवहारः (तत्रैव पृ. ३९)। अत एव पुरोवर्त्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने अयं गौ, अयं वर्णेन श्वेतः, इत्याद्युत्तरस्थले सन्निहितपिण्डमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतेः संगच्छते (तत्रैव पृ. ३८)। एवं प्रतिपादयता नागेशेनार्थविषये स्पष्टं समाहितम् -''वस्तुतो बौद्ध एवार्थः शक्यः पदमपि बौद्धं तयोरभेदो न च बौद्धे दाहादिशक्तिमत्त्वम्'' (तत्रैव पृ. ३८)। ''एवं शक्योऽर्थोपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः (तदेव पृ.२०३)। ''अर्थश्च बौद्ध एव ज्ञानविषयः शक्तिग्रहविषयश्च। ज्ञानं वृत्तिरूपं बुद्धिधर्म एवेति एकदेशस्थत्वात्तेषामितरेतराध्यासः'' (तदेव पृ.३६४)। एवं बहुशः

शब्दार्थसत्ताविषये बौद्धत्वमेवेति घोषयन् भट्टनागेशो भर्तृहरिमतानुसारम् अस्ति, नास्ति, जायते, इति भावत्रयविकाराणामुपपत्त्यर्थम् उपचार-सत्ताश्रयत्वमुपपादयामास। (तदेव पृ.२०३)

ननु हिमालय इति शब्दोच्चारणसंभवे न हिमालयो मुखे प्रविशति, अग्निशब्दोच्चारणकाले मुखे दाहो न भवति, अतः शब्दार्थयोस्तादात्म्यवादिभिः शाब्दिकैर्बौद्धार्थ एव (बुद्धिरूपाधिकरणदेशस्थः) स्वीकर्त्तव्य इति प्रमाणयता नागेशेन बौद्धार्थस्वीकारादेव वन्ध्यासुतखपुष्पशशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धिरित्यपि प्रमाणितम्। अन्यथा वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेनार्थवत्त्वाभावात् प्रातिपदिकत्वन्न स्यात्। बौद्धार्थे स्वीकृते तु तमर्थमादाय अर्थवत्त्वात् सिध्यति (तदेव. पृ. ३१७)। एवञ्च महाभाष्यन्याय-वेदान्तयोगसांख्यसूत्रवाक्यपदीययोगवाशिष्ठपरमार्थसारपुराणोपनिषत्कल्पतरुवा-चस्पतिव्याख्यादिग्रन्थानां प्रमाणैर्बौद्धार्थः साधितः स्थापितश्च, बाह्यार्थः सर्वथा प्रत्याख्यातः प्रख्यातैराचार्यनागेशभट्टपादैः।

## २. महर्षिपाणिनिमतेनार्थस्वरूपविचारो बौद्धार्थखण्डनञ्च

बौद्धार्थवादिनां वैयाकरणानां मतपरीक्षणे महर्षेःपाणिनेः सम्मतिरनिवार्येत्यत्र न हि कस्यचिद् विप्रतिपत्तिः। व्याकरणे शास्त्रे सूत्रकृतामाचार्याणां सम्मतिं विना बौद्धार्थो न वैयाकरणसिद्धान्तः सिध्यति। अतः पाणिनिसूत्रग्रन्थानुसारं पाणिनिसम्मतोऽर्थो विचार्यते।

अर्थशब्दोऽयं नानार्थकः— "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्याचक्षतेऽमरकोशकारः (३/३/८६)। यथा भाष्यकारेण प्रतिपादितम् "नावश्यमर्थशब्दोभिधेय एव वर्तते। किं तर्हि स्यादर्थेऽपि वर्तते, तद्यथा दारार्थं घटामहे धनार्थं भिक्षामहे" इति महाभाष्ये (२/१/५०)। अभिधेयवचनोऽयमर्थशब्दः शास्त्रेऽस्मिन्। "अर्थशब्दो हि प्रयोजनवचनोऽप्यस्ति, यथा-अनेनार्थेनागतः, अनेन प्रयोजनेनेति गम्यते। निवृत्तिवचनोऽप्यस्ति, यथा मशकार्थो धूम इति, मशकनिवृत्त्यर्थ इति गम्यते। धनवचनोऽप्यस्ति, अर्थवान् देवदत्त इति, धनवानिति गम्यते। अभिधेयवचनोऽप्यस्ति, यथा-अस्य वचनास्यायमर्थ इति, इदमस्याभिधेयमिति गम्यते। इह व्याकरणे त्वभिधेयवचनस्यैव ग्रहणम्। तत् पुनरभिधेयं

जातिगुणक्रियाद्रव्यभेदेन चतुर्विधम् (महाभाष्ये ऋलृक्सूत्रे) । अत एव चतुष्टयी शब्दानां प्रवृत्तिर्भवति । तत्र जातिशब्दानां जातिरभिधेया गौरिति । गुणशब्दानां गुणः शुक्ल इति । क्रियाशब्दानां क्रियापाचक इति, द्रव्यशब्दानां द्रव्यं डित्थ इति'' (न्यासे १/२/४५), तथा चार्थशब्दस्य प्रयोगः कोषे धनाभिधेयकारणाभिप्रायवस्तुद्रव्यपदार्थयाच्ञा- निवृत्त्यादिष्वर्थेषु दृश्यते (हलायुधकोषवृत्तौ)। न चैते बुद्धिनिष्ठा अपि तु बाह्यास्तस्माद् बौद्धार्थवादो नोपर्युक्तार्थपदस्यार्थविवेचनेन सिध्यति ।

अष्टाध्यायीमहाभाष्यादिग्रन्थावलोकनेन विज्ञायते हि व्याकरणं खलु शब्दसाधुत्वव्यवस्थापकं शास्त्रम्, अर्थव्यवस्था तु लौकिकव्यवहाराधीना (पाणिनिसूत्रे १/२/५६, महाभाष्ये १/१/३) । तस्मादर्थसत्तानिर्णये न्यायमीमां-सादिशाब्दबोधव्यवस्थापकशास्त्राणां लौकिकव्यवहारस्य चानुमतिरनिवार्या । एतेषु प्रामाणिकेषु न कश्चिदपि बौद्धार्थं स्वीचकार, न चापि सूत्रकारः पाणिनिः सूत्रैरुद्घाटयामास । शाब्दिकपरम्परायाः मूलं भगवतः पाणिनेः कृतिरष्टाध्यायी । अस्यां ह्यतिलाघवेनोपायेनाल्पाक्षरैर्व्याकरणशास्त्रीयज्ञानस्य प्रतिपादनम् । न चात्र प्रयुक्तानां सर्वेषां शब्दानां शास्त्रीयार्थव्याख्यानं लाघवदृष्ट्या महर्षिणा व्यधायि । अतो यत्र यत्र सूत्रे प्रयुक्ता बहवः शब्दाः संज्ञासूत्रमुखेन शास्त्रीयार्थविरहिता आहोस्वित् शास्त्रकारकृतव्याख्यानविहीनाः समुपलभ्यन्ते, तत्र तत्र तेषामर्थो लौकिकोऽर्थ एवेति समुद्घोषयन्ति सर्वे शास्त्रविदः । यथा शास्त्रप्रयुक्ता अनन्तरतुल्यसमाहारस्वरूपोपदेशन-परार्धत्यादय एतेषामर्थः शास्त्रीयप्रक्रियाव्यवहारे आवश्यकोऽपि सन् शास्त्रकारेण संज्ञासूत्रमुखेन न प्रतिपादितो गुणवृद्धिवत् । शास्त्रीयार्थविरहे लोकसिद्धानां सामान्यानामेषां शब्दानां सर्वशास्त्रव्यापको लोकप्रसिद्धार्थः स्वीकर्त्तव्य इति सर्वमान्यः पन्थाः ।

## ३. अर्थस्वरूपविषये लोकप्रयोगानुसरणं बाह्यार्थसिद्धिश्च

अष्टाध्याय्यामेतेषु अग्रलिखितेषु ११५सूत्रेषु पाणिनिना अर्थशब्दः प्रयुक्तः—

१- इदूतौ च० (१-१-१९) २- अर्थवदधातुर० (१-१-४५) ३- प्रधानप्रत्ययार्थ. (१-२-५६) ४- न गति. (१-३-१५) ५- प्रोपाभ्यां. (१-३-४२) ६-

दाणश्च० (१-३-५५) ७- निगरण० (१-३-८७) ८- तसौ मत्वर्थे (१-४-१९) ९- भीत्रार्थानां० (१-४-२५) १०- वारणार्थाना० (१-४-२७) ११- रुच्यर्थानां० (१-४-३३) १२- कुधद्रुहेर्ष्य० (१-४-३७) १३- गतिबुद्धि० (१-४-५२) १४- अच्छ गत्य० (१-४-६९) १५- तृतीयार्थे (१-४-८५) १६- अधिपरी० (१-४-८३) १७- अपिः पदार्थ० (१-४-९६) १५- समर्थः पद० (२-१-१) १९- अव्ययं विभक्ति० (२-१-६) २०- सुप्रतिना. (२-१-९) २१- अन्यपदार्थे० (२-१-२१) २२- तृतीया तत्कृता० (२-१-३०) २३ पूर्वसदृश० (२-१-३१) २४- कृत्यैरधिक० (२-१-३९) २५- चतुर्थीतदर्था० (२-१-३६) २६- स्तोकान्तिक० (२-१-३९) २७- तद्धितार्थो० (२-१-५१) २८- पूरणगुण० (२-२-११) २९- अनेकमन्य० (२-२-२४) ३०- चार्थे द्वन्द्वः (२-२-२९) ३१- गत्यर्थक० (२-३-१२) ३२- क्रियार्थो० (२-३-१४) ३३- तुमर्थाच्च० (२-३-१५) ३४- षष्ट्यत० (२-३-३०) ३५- दूरान्तिकार्थै० (२-३-३४) ३६- दूरान्तिकार्थे० (२-३-३५) ३७- प्रातिपदिका० (२-३-४६) ३८- ज्ञोऽविदर्थस्य० (२-३-५१) ३९- अधीगर्थ० (२-३-५२) ४०- रुजार्थानां० (२-३-५४) ४१- व्यवह्रीपणोः० (२-३-५७) ४२- दिवस्तद० (२-३-५८) ४३- चतुर्थ्यर्थे० (२-३-६२) ४४- कृत्वोऽर्थ० (२-३-६४) ४५- न लोकव्य० (२-३-९६) ४६- तुल्यार्थैर० (२-३-७२) ४७- चतुर्थी (२-३-७३) ४८- आढ्यसुभ० (३-२-५६) ४९- चलनशब्दा० (३-२-१४५) ५०- क्रुधमण्डार्थे० (३-२-१५१) ५१- मतिबुद्धि० (३-२-१८८) ५२- लोडर्थलक्ष० (३-३-८) ५३- तुमुन्ण्वुलौ० (३-३-१०) ५४- ईषद्दुःसुषु० (३-३-१२६) ५५- छन्दसि गत्य० (३-३-१२९) ५६- किंकिला० (३-३-१४६) ५७- उताप्यो० (३-३-१५२) ५८- इच्छार्थेषु० (३-३-१५७) ५९- इच्छार्थेभ्यो० (३-३-१६०) ६०- लिङर्थे लेट् (३-४-७) ६१- तुमर्थे सेसे. (३-४-९) ६२- कृत्यार्थे० (३-४-१४) ६३- हिंसार्थानां० (३-४-४८) ६४- नाधार्थप्रत्यये० (३-४-६२) ६५- शकधृषज्ञा० (३-४-६५) ६६- पर्याप्तिवचनेष्व० (३-४-६६) ६७- तयोरेव (३-४-७०) ६८- गत्यर्थाकर्मक. (३-४-७२) ६९- क्तोऽधि० (३-४-७६) ७०- समर्थानां० (४-१-८२) ७१- प्रतिकण्ठार्थ० (४-४-४०) ७२- धर्मपथ्य० (४-४-९२) ७३- मत्वर्थे मासत० (४-४-१२८) ७४- तदर्थं० (५-१-१२) ७५- उपसर्गा० (५-१-११८) ७६- संख्या विधार्थे० (५-३-९९) ७७- जीविकार्थे. (५-३-६६) ७८- देवतान्तात्. (५-४-२४) ७९- वाचो व्याहृता० (५-५-३४) ८०- बह्वल्पार्था० (५-४-४२) ८१- क्षय्यजय्यौ (६-१-८०) ८२- क्रय्यस्तदर्थे. (६-१-८१) ८३- तत्पुरुषे. (६-२-२) ८४- चतुर्थी तदर्थे (६-२-४३) ८५- अर्थे (६-२-४४) ८६- क्ते नित्यार्थे (६-२-६१) ८७-

भक्ताख्या० (६-२-७१) ८८- अके जीविका० (६-२-७३) ८९- उपमानं० (६-२-८०) ९०- उनार्थकलहं (६-२-५३) ९१- नञो० (६-२-१५५) ६२- ययतोश्चा० (६-२-१५६) ९३- पद्यत्यतदर्थे (६-३-५३) ६४- अर्थे विभाषा (६-३-१००) १०५- ईषदर्थे (६-३-१०५) १०६- निष्ठायाम० (६-४-६०) १०७- प्रयोज्य० (७-३-६८) १०८- अम्बार्थनद्यो० (७-३-१०७) १०९- पश्यार्थे (८-१-२५) ११०- गत्यर्थलोटा० (८-१-५१) १११-एकान्या. (८-१-६५) ११२- चिदिति. (८-२-१०१) ११३- द्विस्त्रि. (८-३-४३) ११४- इसुसोः (८-३-४४) ११५- पञ्चम्याः (८-३-५१).

एवमेवोपशते पञ्चदश पाणिनिसूत्रेषु गृहीतोऽर्थशब्दोऽपि शास्त्रीयार्थव्याख्यानविरहितः। अतः शास्त्रीयार्थव्याख्यानप्रतिपादनरहितस्यार्थ-पदस्य अर्थो लौकिक इति पूर्वकथितसिद्धान्ताश्रयेण सिद्धम्। लोके सर्वाणि कार्याणि व्यवहारश्च बाह्यपदार्थे संघटन्ते, अतो बौद्धार्थोऽसिद्ध एवेति सिद्धम्। तथापि अर्थपदयुक्तानां ११५ सूत्राणाम् उपलब्धपारम्परिकवृत्त्यादिग्रन्थसहाय्येन बाह्यार्थ एव प्रस्फुटितो भवति न कुत्राऽपि बौद्धार्थः परिदृश्यते।

यथार्थवत्सूत्रेऽर्थोऽस्यास्तीत्यर्थवद् इति व्युत्पत्तिः स्वीक्रियते। न चार्थवत्पदस्य कस्यचिच्छास्त्रीयविशिष्टोऽर्थोऽपि तु लौकिकार्थ एवेति स्वीकुर्वन्ति सर्वे व्याकरणग्रन्थकृतः। अस्य सूत्रस्योदाहरणे-वृक्षःशुक्लो डित्थः कुण्डो विप्रः सर्व इत्यादयः प्रयोगाः प्रदर्शिताः। अत्रोदाहृताः प्रातिपदिकशब्दाः सुप्रत्ययान्ताः सर्वे बाह्यार्थवन्तस्तस्माद् बाह्य एवार्थे पाणिनेराशयो निश्चीयते।

एवमेव 'प्रधानप्रत्ययार्थं' (१/२/५६) इति सूत्रस्य व्याख्याने भाषावृत्तिकाराः प्रतिपादयन्ति "-अर्थस्य शास्त्रादन्यो लोकस्तत्प्रमाणत्वात्"। एवमेव वामनजयादित्यौ लेखञ्चक्रतुः—"अन्यो लोकः शब्दैरर्थाभिधानं स्वाभाविकम्। लोकत एवार्थगतेः" इति काशिकावृत्तौ (१/२/५६)। अतः पाणिनिमतानुसारमर्थविषये लौकिकव्यवहारस्यैव मुख्यत्वं सिध्यति। अर्थस्य विशेषणविशेष्यभावरूपस्य लोकानुभवमूलकत्वाल्लोकप्रमाणमेव मुख्यम् इति व्याकरणपरम्परानिर्णयोऽवबुध्यते। यथोक्तम्- "लोकादेव प्रथमव्युत्पत्तिः। अव्युत्पन्नं प्रति व्याकरणादीनामप्रवृत्तेः। अर्थवदधातुरित्यादि हि व्याकरणं शक्तिग्रहोपजीवकम्। तथा च समर्थसूत्रेऽपि वार्त्तिकम् 'अर्थानादेशनात्' इति। ततश्च लोकादेव शब्दे अर्थे तयोः सम्बन्धे च सिद्धेऽर्थबोधनाय शब्दप्रयोगेऽपि

प्रसक्ते गवादय एव प्रयोक्तव्या न तु गाव्यादयः, इति नियमार्थं शास्त्रम्" इति शब्दकौस्तुभे (१/१/१, पृ.२९) उक्तम् । एवमेव लोकानुभवमूलकत्वात्, प्रकृतिप्रत्ययार्थयोश्च विशेष्यविशेषणभावनियम—स्यानुभवविरोधाद् वचनेन व्यवस्थापयितुमशक्यत्वात् । क्वचित् प्रत्ययार्थ—प्रकारकप्रकृत्यर्थविशेष्यकस्य क्वचिच्च प्रकृत्यर्थप्रकारकप्रत्ययार्थविशेष्यकस्य बोधस्य सर्वानुभवसिद्धत्वात्" इति तर्ककौतूहले (पृ. १३२) विश्वेश्वरसूरिः प्रतिपादयाञ्चक्रे । लोके शब्दप्रयोगः बाह्यार्थमादाय प्रवर्त्तते । घटमानय, गां नय, पात्रमाहर इत्यादिवाक्येषु बाह्यपदार्थस्यैव बोधः संभवति, नत्वत्र बुद्धिसमाविष्टस्य कस्यचित् पदार्थविशेषस्यावगतिः प्राप्यते । तथापि केचिदिह नव्यवैयाकरणाः बौद्धार्थं व्याकरणे लोके च सिसाधयिषवः सन्ति । तत्तु न समीचीनं, लोके शास्त्रे च व्यवहारः प्रयोगश्च बाह्यार्थमादायैव प्रवर्तते । महर्षिपतञ्जलिनाभिहितं हि- "लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः" महाभाष्ये (१/१/३) इति । शास्त्रमपि लौकिकार्थानुसारमेव प्रवर्तते । अतो बौद्धार्थवादिनां मतं न रमणीयमिति बाह्यार्थस्य लोके प्रत्यक्षसिद्धत्वान्निश्चीयते । न चाष्टाध्यायीग्रन्थे प्रयुक्ताः सर्वे शब्दाः शास्त्रीयामर्थवत्तां लभन्ते, वृद्धिगुणसंयोगादिशब्दवत् । अत एव शास्त्रकारनिर्दिष्टसंज्ञाया अन्यत्र स्थले लोकप्रयोगानुसरणमेव मान्यो मार्गः । अयमेव मार्ग आकात्यायनात् सर्वैः शाब्दिकैः सादरमनुसृतः । अतो नागेशपादैरुक्तम्-

लोक्यते येन शब्दार्थः लोकस्तेन स उच्यते ।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा ॥ महाभाष्यप्रदीपोद्द्योते ४/१/३,

उच्चरितेन शब्देनार्थो गम्यते, अतः शास्त्रेऽस्मिन् शब्दार्थयोर्वाच्यवाचकभावसम्बन्धः स्वीक्रियते । तस्माच्छब्दः संज्ञा, अर्थस्तु तत्संज्ञीति सिद्धम् । अत एव महाभाष्यकृद्भिरुक्तम्-

"यथा लोके, तद्यथा गोपालकमानय, कटजकमानय इति यस्यैषा संज्ञा भवति स आनीयते" । (महाभाष्ये१/१/२२, वार्त्तिकम् २) इत्यत्र गोपालकसंज्ञाभिहितो जन आनीयते । नात्र बौद्धार्थस्यानयनप्रसङ्गोऽनभीष्टत्वात् । अतः सिद्धमेतल्लोकप्रसिद्धार्थ एव महाभाष्यकृद्भिरर्थशब्दः प्रयुज्यते । इह सर्वथाऽऽनयनक्रियायाः कर्मत्वं बुद्धिविषये बाह्यार्थे इष्यते, न तु बौद्धार्थे योग्यताभावात् । अतोऽर्थस्वरूपग्रहणे लोकप्रयोगानुसरणमेव शाब्दिकैः कर्त्तव्यम् । 'कारके' (१/४/२३) इति

सूत्रभाष्येऽपि तत्स्पष्टम्- ''इह हि व्याकरणे ये वैते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते । या वैताः कृत्रिमाष्टिघुघभादिसंज्ञास्ताभिः ''इति । अतो लोकप्रयुक्तार्थव्यवहारमादाय शाब्दिकैरर्थस्वरूपं निर्धारणीयम् । लोके तु बाह्यार्थेनैव गतिः ।

नित्यः शब्दः नित्यो ह्यर्थो नित्यश्च तयोः सम्बन्ध इति भाष्यकृत्सिद्धान्तः । तत्र न कुम्भकारतन्तुवायकृतघटपटादीनामर्थत्वम्, तेषामनित्यत्वात् । वस्तुतस्तु लोकप्रयुक्तान् शब्दान् अर्थान्, तयोः सम्बन्धांश्चाधिकृत्य व्याकरणशास्त्रं प्रवर्तते । नित्य इति सिद्धशब्दस्य पर्यायः । एवमेव भाष्यव्याख्यानं कर्त्तव्यम् ।

## ४. भयाद्यर्था अपि बाह्या आत्मनिष्ठा अनुभूतिविषयाः

किञ्च 'भीत्रार्थानां भयहेतुरिति' (१/४/२५) सूत्रे भयाद्यर्था बाह्या न वेति शङ्का समुदिता भवति । इदमत्रावधेयम् । लोके प्रायोऽर्थो बाह्यो घटपटवत्, कदाचिद् ज्ञानेच्छाद्वेषप्रयत्नादिवदाभ्यन्तर आत्मनिष्ठः । भयस्तु ज्ञानमिवात्मनिष्ठधर्मः शरीरविकारविशेषहेतुनाऽनुमीयते । यथा धूमेन वह्निरनुमीयते तथैव त्राणादिक्रिया तु प्रत्यक्षादिप्रमाणैर्गृह्यते । काकेभ्यो दधि रक्षितं चैत्रेण तद् मया दृष्टम्, इत्यत्र तु त्राणक्रिया प्रत्यक्षग्राह्या । वस्तुतो बाह्यव्याघ्रादिजन्यभयं बाह्यमेव, तच्च मनोग्राह्यम् बाह्यविषयतया ।

अत्रार्थशब्दो भयत्राणादिषु समस्तः । भयादयो न पदार्थवत् प्रत्यक्षेण, अपि त्वनुमानादवगम्यन्ते, अतस्ते बुद्धिगम्याः । भयाद्यर्थाः बाह्यसत्तावद्भिः पदार्थैः प्रत्युद्भूताः भवन्ति । भयस्य कारणानां सिंहादीनां बाह्यसत्तया सिंहस्थक्रूरकर्मकर्तृत्वेन तज्ज्ञाः मनुष्याः भयं प्राप्नुवन्ति । भयस्य सत्त्वमाकृतिविकृत्याऽनुमीयते, मनसि कूरकर्मस्मरणेन मुखाकृतिर्विकारमुपैति । अत एषामर्थो मनोग्राह्य एव । व्याघ्रादीनां रौद्रत्वं श्रुत्वा अथवा ज्ञात्वा तत्स्मरणेन प्रत्यक्षदर्शनाभावेऽपि तेषामागमनशङ्कया अनिष्टं प्रकल्प्य मानवो विभेति । यद् भयस्य कारणं, तत्तु सर्वदा बाह्यजगति सत्तावद्, तेनैव अन्तरिन्द्रियेण मनसा भाविकल्पनातो भयादीनां सत्ता अवगम्यते । अतो भयादयस्तु मनोग्राह्या बुद्धिगम्याश्च । अत्र नैयायिकवरा भवानन्दसिद्धान्तवागीशास्तर्कयाञ्चक्रुः- ''पञ्चम्या हेतुत्वमर्थः, धातोश्च

यथायथं भयं भयाभावश्चार्थः, पञ्चम्यर्थश्च हेतुत्वं धात्वर्थभये धात्वर्थतावच्छेदकोभयेऽन्वेति, चाख्यातार्थश्चाश्रयत्वं परत्रानुकूलव्यापारश्च व्याघ्रहेतुकभयाश्रयः शत्रुहेतुकभयाभावानुकूलव्यापारवानिति च यथायथमन्वयधीः'' इति कारकचक्रे (पृ.६६-६७) । तत्रैव टीकाकारो महादेवतर्कालङ्कारो व्याचख्यौ हि- ''भावित्वेनानिष्टचिन्तनं भयपदार्थः तदेकदेशेनिष्टे पञ्चम्यर्थहेतुत्वस्य जन्यत्वस्य वाऽन्वयः, तथा च व्याघ्रहेतुकं यदनिष्टं भावित्वेन तच्चिन्तनाश्रय इत्याकारको बोधः'' इति माधवीटीकायाम् (पृ.६७) । अतो भयाद्यर्थानां बौद्धार्थकल्पनं न सङ्गच्छते ।

## ५. पाणिनिमतेन सर्वेषां शाब्दिकानां सम्मतो बाह्यार्थ इत्यस्य सयुक्तिकं साधनम्

किमर्थवत्त्वम् ? इति जिज्ञासायामर्थो लोकप्रमाणक इति युक्तमेवोच्यते ग्रन्थकृद्भिः — 'प्रधानप्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वात्' (१/२/५६) । लोकप्रमाणादेव येऽर्थाः सिद्धाः, पदविधायकं लक्षणं न करणीयमिति सूत्रकृतामाशयः । अनेन ज्ञायते लोकसिद्धा बाह्यार्था एव पाणिनेरभिमताः । यतो हि न खलु लोके सर्वे जना बौद्धार्थज्ञातारः, न च वैयाकरणाः । लोकव्यवहारो बाह्यार्थमेव स्वीकृत्य प्रवर्तत इति प्रत्यक्षसिद्धं तथ्यम् । अत एव वृत्तिकारा (१/२/५६) उदाजह्रुः ''औपगवमानय, राजपुरुषमानयेत्युक्तेऽ-वैयाकरणोऽपि राजसम्बन्धविशिष्टपुरुषं चानयति । उपगुविशिष्टापत्यं चानयति'' । पुरुषस्य राजभृत्यत्वम् उपगुपुत्रस्य लौकिकबाह्यार्थज्ञानेनैव प्रैष्य आनयनक्रियायां प्रवर्तते । राजपुरुषौपगवादिशब्दानां लोके प्रयुक्तानां बाह्यलोकव्यवहारेणैव गृहीतमपत्यार्थं सम्बन्धार्थञ्च बुद्धिविषयीकृतं जानन् आनयनक्रियायां प्रवर्तते । न तु स बौद्धसत्तामपि जानाति । अतो बौद्धार्थ एवेति कथनमयुक्तम् । बौद्धार्थवादिमते तु बौद्धार्थमजानतः प्रैष्यस्यानयनादिक्रियाप्रवृत्तिरेव न स्यात्, दृश्यते च बौद्धार्थमजानतामपि तादृशानयनादिक्रियाप्रवृत्तिः । अतः प्रत्यक्षसिद्धस्यार्थस्यापलापो न प्रमाणसहस्रेणापि कर्तुं शक्येत । एवमेव ''तदशिष्यं संज्ञाप्रमाणत्वादित्यादिसूत्राण्यपि'' (१/२/५३-५६) प्रमाणभूतान्यत्र जाग्रति ।

किञ्च बौद्धार्थवादिभिः भर्तृहरिनागेशादिभिरपि वस्तुतोऽर्थस्य बाह्यसत्तैव स्वीक्रियते । अत्रेदं प्रमाणम्-

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पितोऽभेदः क्रियेति व्यपदिश्यते ॥

वाक्यपदीयम् क्रियासमुद्देशः ४ ।

कारिकार्थः- गुणभूतैरवयवैः क्रमजन्मनामेव यः समूहः स पिण्डीभूतो द्रष्टुमशक्योऽपि बुद्ध्या दृश्यमाणेनान्तिमावयवेन समूहीकृतः प्रकल्पितः क्रियापदवाच्य इत्यक्षरार्थः । अत्रेदमुच्यते भर्तृहरेर्बौद्धार्थोऽभीष्टश्चेद् बुद्ध्या प्रकल्पितोऽभेद इत्येव न वदेत् । प्रत्युत "बौद्धश्चैवान्तरसिद्धः क्रियेति व्यपदिश्यते" इत्येव वदेत् । अतः कारिकाटीकाकृत एवमेवार्थमाहुः । स्वयञ्च नागेशोऽपि मञ्जूषायाम्- "क्रमजन्मनामेषां व्यापाराणां समूहः स्वभावतो गुणभूतैः तत्तद्रूपेण भासमानैरवयवैर्युक्तः संकलनात्मिकयैकत्वबुद्ध्या प्रकल्पितोऽभेदः क्रियेति व्यवह्रियते" (धात्वर्थविचारे पृ. ४५) इति व्याचख्यौ ।

बौद्धार्थ एवाभिमतश्चेत्, संकलनात्मिकैकत्वबुद्ध्याभेदप्रकल्पनमसङ्गतं स्यात् । क्रियात्मकबौद्धार्थरूपेणैवाभीष्टसिद्धेः । एतावतैव बौद्धार्थः प्रत्याख्यातो भवति । ननु बाह्यार्थसत्ताप्यपेक्षिता तदर्थोऽयं यत्न इति चेद् न, बाह्यार्थसत्तयैवाभीष्टसिद्धे कोऽयं बौद्धार्थसत्तासिद्धौ दुराग्रहः ? शीतशर्करादिनोपशमनीये रोगे कटुकौषधीसेवने न कोऽपि परिणतमतिः प्रवर्तत इत्यनेन न्यायेन कोमलमतीनामवैयाकरणानाम्परिणतमतीनां च वैयाकरणानामपि सर्वेषामेव बाह्यार्थसत्तयैवाभीष्टसिद्धिः ।

किमर्थमयं बौद्धार्थसत्तास्वीकाररूपक्लिष्टकल्पनाप्रयत्नः ? किञ्चात्र पृच्छ्यते पण्डितमानी ! बौद्धार्थः किं ज्ञानरूप उत वा तदन्यः ? नाद्यो ज्ञानस्य सावयवाऽऽपत्तेः । सावयवत्वस्वीकारे च ज्ञानस्यानित्यतापत्तेः । यद्यत्सावयवं तत्तदनित्यं यथा घटादिकं सावयवत्वाद् अनित्यम् । न च द्वितीयो ज्ञानातिरिक्तोऽज्ञानमयत्वाद् असत्यत्वात् । न च ज्ञानविषयत्वं वक्तुं शक्यते । ज्ञानविषयत्वमिति उच्यते चेत्, स्वमतसन्यासाश्रमं प्रविष्टः परमतप्रवेशापत्तिः । ज्ञानविषयस्य बाह्यपदार्थसापेक्षत्वात् । ननु ज्ञानं बाह्यपदार्थं विषयीकुर्वत् स्वात्मानमपि विषयीकरोति इति न वाच्यम् । ज्ञानं स्वात्मानं विषयीकुर्वाणमपि न हि घटापटादिस्वरूपं लभते प्रत्युत स्वरूपमेव प्रकाशयति । यथा दीपः स्वातिरिक्तं विषयं प्रकाशयन् स्वात्मानं ज्वलनशीलमेव प्रकाशयति । न घटपटादिरुपेण परिणमति, एवमेव ज्ञानं

स्वात्मानं विषयीकुर्वदपि निराकारं निरवयवं स्वात्मानं प्रकाशयेत, न तु स्वेतरविषयरूपं भवति, अतो न बौद्धार्थसिद्धिः, बौद्धार्थसाधनं भ्रममात्रमेव।

किञ्च बौद्धार्थो ज्ञानकार्यमथवा ज्ञानरूपः ? तत्रापि नाद्यः बौद्धार्थोऽनित्यः कार्यत्वात् क्षणभङ्गुरत्वात्। न पदार्थप्रतीति हेतुः सिध्यति, न चापि पदार्थस्वरूपः सिध्यति अतो नाद्यः। न च द्वितीयः पदार्थ साङ्कर्याद् नाभीष्टपदार्थप्रतीतिजनको, न चाप्यभीष्टपदार्थरूपः। तस्माद् बौद्धार्थो न स्वीकार्यः। तथा च सर्वेषां शाब्दिकानां सम्मतो बाह्यार्थ एव स्वीकर्त्तव्यः।

## ६. शशशृङ्गादिपदानां बौद्धार्थं विना प्रातिपदिकत्वासिद्धिदोषस्तत्समाधानञ्च

अत्र सन्त्यर्वाचीनाः शब्दशास्त्रविदो ये पाणिनिसमादृतो बौद्धपदार्थवाद इति समुद्घोषयन्ति। इदानीं तेषां पक्षाणां बलाबलं निर्णीयते। महर्षेः पाणिनेः प्रातिपदिकसंज्ञाविधायकं प्रथमं सूत्रम् "अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति" (१/२/४५) वरिवर्ति। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यादिति सूत्रार्थः। तत्र शशशृङ्गम् वन्ध्यापुत्रः, कूर्मक्षीरम्, इत्यादिशब्दानां बाह्यार्थाभावेऽपि प्रातिपदिकत्वमिष्यते, अन्यथैषां सुबुत्पत्तिर्न संगच्छते। न ह्यर्थवत्ताभावेन प्रातिपदिकत्वं संभवति, तस्मात् सिद्धा सूत्रकारपाणिनिसमादृता बौद्धार्थतैतेषाम्। उक्तिरियं प्रदर्शिता भट्टनागेशेन लघुशब्देन्दुशेखरे कृत्तद्धितेति सूत्रे, उद्द्योते १/२/४६, लघुमञ्जूषायां (पृ. ३१७) परमलघुमञ्जूषायाञ्च (पृ. ४३) तत्परवर्तिभिः शाब्दिकैश्च बौद्धार्थसाधने। नैषा नागेशाविष्कृता। एवमेवास्या बीजं हेलाराजव्याख्याने दरीदृश्यते-"सर्वेषामिति अभावविषयाणां शशविषाणादिशब्दानामप्याकारोल्लेखिनी" इति वाक्यपदीये ३/३/३९। औपचारिक्या सत्तयैव शशविषाणादीनामर्थवत्त्वम्।

अत्रोच्यते-अर्थवत्सूत्रस्य प्रयोगं विना समासत्वाद्, एषां शशशृङ्गादिपदानां द्वितीयसूत्रेण 'कृत्तद्धितसमासाश्च' इत्यनेन प्रातिपदिकसंज्ञा भवेत्। लोके शशपदवाच्यस्यार्थस्य बाह्यसत्ता समुपलभ्यते शृङ्गपदवाच्यस्यापि। न चात्र सामर्थ्यमिति वाच्यम्। अग्नौ सेचनक्रियाया योग्यताऽभावेऽपि 'अग्निसेकः' इत्यत्र समासो भवत्येव। तस्मात् सिद्धः शशस्य

बाह्योऽर्थः शृङ्गस्याऽपि । तत्र तु तयोः सम्बन्धोऽसन् मिथ्या वा तेन बाह्यार्थपक्षे न कापि क्षतिः। लोके वाग्व्यवहारे मिथ्यावाक्यादपि शक्तिग्रहः सिद्धः, यथा कश्चिद्वदति 'सूर्यौ स्तः' इति वाक्यश्रवणाच्छाब्दबोधो निर्बाधः।, सूर्यस्य सत्ता बाह्या सा च एकैव, अतो द्विवचनं मिथ्यार्थकमिति गृह्णाति श्रोता। न चात्र सूर्यद्वयस्य बौद्धसत्ता कल्पनीया। बोधस्त्वर्थज्ञानं नत्वर्थः। यथा 'सूर्यौ' इत्यत्र द्विवचनम् असदपि व्याकरणशास्त्रेण सिध्यति । तथैव शशशृङ्गादिशब्देषु श्रुतेष्वर्थबोधो बाह्यार्थेनैव संभवति । अतः शशशृङ्गादिसमासानां प्रातिपदिकसंज्ञार्थं समासग्रहणमावश्यकम्।

यदि चात्र वेदान्तसिद्धान्तवदनिर्वचनीयख्यातिः स्वीक्रियते तर्हि तत्र तंत्रानिर्वचनीयं शृङ्गादिकमस्त्येव । अतो बौद्धार्थकल्पनं व्यर्थम् । अथवा पूर्वसूत्रेणैवैषां शशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धिः स्यात् । यदुक्तं बृहच्छब्दरत्ने (सीतारामशास्त्रिसम्पादिते पृ.२७५) "शशशृङ्गादिशब्दानां विशकलितं प्रसिद्धं शशशृङ्गादिकमारोपितसम्बन्धं शक्यम्, गवादिष्वनुभूतं विषाणं शशमस्तकवर्त्तितया बुद्ध्योत्प्रेक्ष्य तस्यैवाऽभिधानाय शशविषाणादिशब्दानां प्रयोगात्। अतः पूर्वसूत्रेणैव सिद्धिः" इति।

अथवा शशशृङ्गादिपदानां लोकेऽर्थबोधकता दृश्यते, तस्मादर्थप्रीतिजनकत्वात् प्रतिपादिकसंज्ञायां न काऽपि बाधा। लोके सुतो भवति,वन्ध्यापि भवति,तथापि न वन्ध्यायाः सुतः। 'वन्ध्यासुतो नास्ति' इति वाक्यस्य परिष्कृतोऽर्थः-सुते वन्ध्यानिष्ठजनकत्वनिरूपितजन्यत्वन्नास्ति सुतेऽवश्यं जन्यत्वम्। किन्तज्जन्यत्वं वन्ध्यानिष्ठजनकतानिरूपितम् ? वन्ध्या या सा न जननी, या जननी सा न वन्ध्या, अन्योऽन्यविरोधात्। तथैव लोके शशः श्रृङ्गञ्च लभ्येते, किन्तु शशस्य श्रृङ्गं नास्ति, श्रृङ्गे शशीयत्वं नास्ति, सुते यथा वन्ध्यानिष्ठजनकत्वनिरूपितजन्यत्वं नास्ति, तथा शृङ्गे शशशरीरनिष्ठसमवायसम्बन्धावच्छिन्नजन्यत्वनिरूपितजनकत्वं न । इह नागेशभट्टमते कीदृशो बौद्धार्थः, येन बाह्यार्थो निवार्यते। न चैकस्मिन्काल एकविशेष्यकोऽस्तिनास्तिप्रकारकविषयो बुद्धिमधिरोहति । तद्विशेष्यक-नास्तिप्रकारकबुद्धिं प्रतितद्विशेष्यकास्तिबुद्धेः प्रतिबन्धकत्वात्। प्रतिबन्धकत्वं नाम कारणीभूताभावप्रतियोगित्वम्, कार्यानुत्पादप्रयोजकत्वं स्वरूपसम्बन्ध-विशेषो वा। यो यस्य कार्यस्य प्रतिबन्धकस्तदभावस्तस्य कारणमतः प्रतिबन्धके वस्तुनि कारणीभूताभावप्रतियोगित्वं घटते। यथा 'चैत्रो गच्छति'

इत्यत्र वर्तमानकालिकी बुद्धिः । अतो' वन्ध्या चेयं माता चेयम् इति वाक्याद् विशेष्यज्ञानस्य प्रकारज्ञानप्रतिबन्धकत्वाद् वाक्यान्न प्रमा यथार्थज्ञानं संभवति । तथापि बोधस्तु-इदन्त्वविशिष्टमातृत्वावच्छिन्नविशेष्यकवन्ध्यात्वावच्छिन्न-स्वरूपसम्बन्धावच्छिन्नप्रकारकः । एतावता वीरप्रसूरियं माता, इतिवद् वन्ध्यात्वविशिष्टमातुर्बौद्धसत्ता मातरि वर्तते, इति न सिध्यति ।

## (अ) न्यासकारस्य बौद्धार्थं विना शशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धिः

प्रातिपदिकसंज्ञासूत्रव्याख्यानावसरे न्यासकारो व्याजहार- "यद्यर्थवतः प्रातिपादिकसंज्ञा विधीयते तदाऽभाववचनशशविषाणादिशब्दानां प्रातिपदिकसंज्ञा नोपपद्यते, अर्थाभावात् । नैतदस्ति, 'अर्थशब्दोऽभिधेयवचनः' इत्युक्तम्, अभावोऽप्यभिधेयो भवत्येव । अन्यथा अर्थाभावादितीदं वचनमनुच्चारणीयं स्याद्, अनर्थकत्वात् । न ह्यनर्थकं वचनं प्रयोगमर्हति । तस्मादभाववचनानामपि प्रातिपदिकसंज्ञा भवत्येव" (१/२/४५ इति)

यद्यपि न्यासकारेणेह बौद्धसत्तास्वीकारपक्ष उपस्थितेऽप्यर्थस्य बौद्धत्वं नाङ्गीकृतम्परन्तु शशविषाणादिपदानां प्रातिपदिकत्वसिद्ध्यर्थं यो मार्ग उन्नीतः, स न समीचीनः । तेषाम्मते शशशृङ्गमिति पदमभाववाचकमतोऽभावरूपार्थवत्तया तस्य प्रातिपदिकत्वं सिध्यति । अत्र न्यासकारान्प्रति प्रश्नोऽयमुत्थापनीयः-शशशृङ्गपदेन नाभावमात्रमभिहितं भवति, अन्यथाभावशशशृङ्गपदयोः पर्यायत्वं प्राप्नोति, पुनश्च गगनकमलशशशृङ्गवन्ध्यासुतादीनां पदानां पर्यायत्वं तेषां गले लग्नम् । अतो न्यासकारस्य मार्गेणानेन तेषामर्थवत्ता न सिध्यति ।

## (इ) अर्थवत्पदस्यानुवृत्तिविचारः

महाभाष्यकारास्तु 'कृत्तद्धितसमासाश्च' इति सूत्रे पूर्वसूत्राद् अर्थवत्पदस्यानुवृत्तिं प्रतिपादयामासुः- "कृत्तद्धितसमासाश्चेत्यन्तग्रहणं कर्त्तव्यमिति । न कर्त्तव्यम् । अर्थवदिति वर्तते, कृतद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वा" इति (१/४/१४) । अतः कथं द्वितीयसूत्रेण प्रातिपदिकसंज्ञा शशशृङ्गादिपदानां भवतीति प्रश्नः समुद्भवति । परञ्च द्वितीयसूत्रेऽर्थवदिति

नानुवर्तते । प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषया कृदन्ततद्धितान्तयोर्लाभः । संज्ञाविधौ प्रत्ययग्रहणे न तदन्तग्रहणमिति तु प्रायिकम् । अत्र नैयायिकधुरन्धराः पण्डितमहादेवपुणताम्बेकरा व्याकरणमतविवेचनावसरे न्यायकौस्तुभे शब्दपरिच्छेदे (पृ. ६६९-७०) इत्थं तर्कयाञ्चक्रिरे हि -''अर्थवदादिसूत्रेण प्रातिपदिकसंज्ञाया असंभवेऽपि 'कृत्तद्धितसमासश्च' (पा.सू. १-२-४६) इति सूत्रान्तरेणैव प्रातिपदिकसंज्ञायाः संभवाद् न दोष इति वाच्यम् । कृदादिसूत्रेऽपि अर्थवद्ग्रहणानुवृत्त्या तेनाऽपि सूत्रेण तत्संज्ञाया असंभवात् । अन्यथा अर्थवदादिसूत्रे धातुप्रत्ययानां पर्युदासबलादेवार्थवत्त्वे लब्धेऽर्थवद्ग्रहणस्यानर्थक्यप्रसङ्गात् । कृदादिसूत्रेऽनुवृत्त्यर्थमेव तदुपादानात् । कृत्तद्धितान्तलाभाय कृत्तद्धितयोरर्थवद्ग्रहणानुपपत्तेरावश्यकत्वाच्च'' इति । अतो नैयायिका द्वितीयसूत्रेऽर्थवत्पदस्यानुवृत्तिं न स्वीकुर्वन्ति । एतेषां मतेऽर्थवद्भिन्नस्यापि समासस्य प्रातिपदिकसंज्ञा द्वितीयसूत्रेण निर्बाधा संभवति । द्वितीयसूत्रे तद्धितपदेन स्वाव्यवहितोत्तरत्वसम्बन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदायतद्धितान्तान्यतरद्विवक्षितम् । अतो मध्यस्थिततद्धितकस्य 'पचतकि' इत्यस्य न प्रातिपदिकसंज्ञापत्तिः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषाया मूलकेनोपदेशमित्यस्य कारकपूर्वकस्य न ग्रहणापत्तिः, 'ज्ञापकसिद्धं न सर्वत्र' इत्यस्यासार्वत्रिकत्वादिति महादेवपुणताम्बेकराः प्रणिजगदुः ।इत्थमेव प्रकारेण श्रीहरिवल्लभा वैयाकरणभूषणसारे दर्पणटीकायां समासशक्तिनिर्णये (का. १) कृत्तद्धितसूत्रस्य विधित्वपक्षं परिश्चक्रुः । तथाप्यस्य सूत्रस्य विधित्वं 'पचतकि' इत्यादावतिप्रसङ्गेन दूषयित्वार्थवत्सूत्रेणैव समासस्य प्रातिपदिकसंज्ञां स्वीचक्रिरे कौस्तुभकृतः । अर्थवत्त्वं च समाससाधारण्येन वृत्तिमदविषयकप्रतीत्यविषयत्वमिति तार्किकराद्धान्तः । अयमर्थवत्त्वपरिष्कारः श्रीधर्मदत्तसूरिभिरपि गूढार्थतत्त्वालोके परिगृहीतः, इति बोध्यम् । तथैव वैयाकरणविशेषोऽपि प्रतिपादयति । अथवाऽत्र केवलयोः कृत्तद्धितयोः संज्ञाया प्रयोजनाभावात् संज्ञा विधाविति निषेधोऽत्र न भवति । अस्मादेव पूर्वसूत्रे संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तलाभात् प्रत्ययान्तपर्युदास इति विवरणं बालमनोरमायामर्थवत्सूत्रे परिलक्ष्यते वासुदेवदीक्षितस्य ।

## (उ) शशशृङ्गादिपदानां प्रातिपदिकत्वस्य लक्षणया निर्वाहः

अथवा भवतु अर्थवत्पदस्यानुवृत्तिः । तर्हि किमर्थवत्त्वम् ? पाणिनिमतेनार्थो लोकप्रमाणकः । तर्हि शशशृङ्गमित्युक्ते शशस्याऽप्यर्थो ज्ञायते शृङ्गस्यापि ज्ञायते । परञ्च तत्राभेदसम्बन्धो न ज्ञायते, अभेदसम्बन्धस्तु योग्यताभावात् मिथ्येति निश्चीयते । इत्थं प्रकारेणार्थो बाह्यसत्तावान्, इत्येव सिध्यति । शशविषाणादिपदानामर्थबोधः कथं भवतीत्यस्य विवेचना विश्वेश्वरसूरिणा स्वग्रन्थे 'व्याकरणसिद्धान्तसुधानिधौ' (पृ. ६०१) कृता । यथोक्तं हि - "शशविषाणादिसमासार्थमयमपूर्वविधिः, तेषामनर्थकत्वात् । ननु शशपदं शशसम्बन्धाभाववत्परम् । तस्याभेदेन विषाणान्वयः । तथा च शशसम्बन्धाभाववदभिन्नं विषाणमित्यर्थवदेव तदिति वाच्यम् । शशविषाणं नास्तीत्यस्यायोग्यत्वापत्तेः । अत एव विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणनिर्मितं कार्मुकमिति वाक्यान्न शाब्दधीरित्यभियुक्ताः " इति । तथा च शशशृङ्गादिपदानामपार्थकत्वं क्षीरस्वाम्यादिभिः प्रतिपादितम् । सैवाभिमतः "संगतिग्रहणाभावाच्छशशृङ्गादिपदानामबोधकता" इति बौद्धधिक्कारस्य (आत्मतत्त्वविवेकस्य) दीधितिग्रन्थेन (पृ. ६९) निश्चीयते । परञ्च मतमिदनुचितं प्रतिभाति । शशविषाणादिपदश्रवणाच्छाब्दबोधो भवत्येव । अत एव श्लोकवार्त्तिके चोदनासूत्रे (पृ. ६) मीमांसककुमारिलभट्टा आहुः–" अत्यन्तासत्यपि ह्यर्थे शब्दः ज्ञानं करोति हि"। मतमिदं खण्डनकारेण समर्थितम् । तथा च "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति योगसूत्रप्रमाणेन शशविषाणादिपदानां शाब्दबोधोऽस्त्यत्र न शङ्कापङ्कावसरः । अतो न्यायलीलावत्यामुक्तं 'गगनकमलस्यापि शब्दाभासप्रतिपन्नत्वात्' इति संगच्छते । अत्र नैयायिकमतेन समाधानं प्रतिपादयामास श्रीविश्वेश्वरसूरिः- "वस्तुतस्तु तन्निष्ठात्यन्ताभावप्रतियोगिनि शशपदस्य लक्षणा । ततश्च तदर्थेनार्थवत्त्वात्प्रातिपदिकसंज्ञा । 'शशसम्बन्धविशेषवद्विषाणम्' इति धीस्तु भ्रमादेव । एतेन शशविषाणं नास्तीत्यपि व्याख्यातम् । शशसम्बन्धविशेषस्यैव तत्र प्रतियोगितावच्छेदकताया भ्रमविषयत्वात् । अत एव 'शशादिप्रत्येकपदार्थव्युत्पन्नस्य शशविषाणादिपदात्तदर्थप्रत्ययप्रसङ्गात्' इति दीधितावुक्तं, विशिष्टस्यार्थवत्त्वं नास्तीत्यभिप्रायात् । अयं तु विशेषः तादृशार्थविशेषशक्तस्य शशविषाणादिसमासस्य कदाचिच्छक्तिभ्रमादन्यथाबोध-कत्वमिति । प्राञ्चस्तु खपुष्पशशशृङ्गादिशब्दानामभाववचनत्वादर्थवत्त्वम् ।

तथाहि-'खे पुष्पं नास्तीति' विग्रहे नञर्थान्तर्भावः । विग्रहे नास्तीति कथनं समासार्थविवरणार्थम् । समासोत्तरं नास्तीतिपदजातं त्वनुवादमात्रम् "इति वैयाकरणसिद्धान्तसुधानिधौ (पृ.३०१) । अतोऽत्र लक्षणया प्रक्रियानिर्वाहः संभवति । न चात्र बौद्धसत्ताकल्पना वरेण्येति तार्किकाणामाशयः ।

## (ऋ) नव्यार्वाचीनशाब्दिकैर्बौद्धार्थास्वीकारे प्रातिपदिकत्वसिद्धिः

अत्र न केवलं नैयायिकैरपि तु प्रख्यातवैयाकरणैः कौण्डभट्टैर्न बौद्धार्थः स्वीकृतः, न चाप्याधुनिकैर्वैयाकरणैर्हर्षनाथमिश्रैः । अतो वैयाकरणदृष्ट्यार्थवत्त्वं निरूप्यते । शशशृङ्गादिपदानां प्रातिपदिकसंज्ञाविधानार्थं समासग्रहणम्, इति नैयायिकमतं खण्डयता कौण्डभट्टेन बृहद्भूषणे समासशक्तिनिर्णये निगदितम् (पृ. १७०)— "शशशृङ्गादिपदे पुनः विशकलितप्रसिद्धं शशशृङ्गादिकमारोपितसम्बन्धे शक्यम् । अतः 'अर्थवत्' सूत्रादेव सेति बोध्यम् । तस्माद् न समासग्रहणात् सा" इति । एवञ्च कौण्डभट्टमते लक्षणयाप्यर्थो ज्ञायते । बृहद्भूषणे (पृ. १७२) यथोक्तम् -"अर्थप्रतीतिजनकविषयशब्दत्वम् अर्थवत्त्वं वाच्यम् । तच्चैकस्य पदस्य लक्षणयाऽपरस्य तात्पर्यग्राहकत्वादिना वेत्येव समूहस्य निर्बाधम् । अथ समासवाक्यस्य विशिष्टार्थलक्षणायाम् अर्थवत्त्वाबाधात् प्रातिपादिकसंज्ञा नानुपपन्ना" इति । अतो निसंदिग्धमिदं हि, अनेनापि वैयाकरणधुरन्धरेण बौद्धार्थो नाङ्गीकृतः । न केवलं प्राचीनपण्डितैरपि चाधुनिकैरपि वन्ध्यासुतादौ बौद्धार्थो न स्वीक्रियते । नागेशभट्टस्यालोचनां विदधता हर्षनाथमिश्रमहोदयेन संस्कृतविमर्शे (८-९) वर्षे (८०-८१) केवलो बौद्धार्थो न शब्दप्रतिपाद्ये, (पृ.१२) निबन्धे युक्तिसम्मतमिदं लिखितम् –"वन्ध्यासुतादिशब्देऽपि असंभवरूपलक्ष्यार्थमादाय प्रातिपदिकत्वं सम्पादयितुं शक्यम्, वाक्यसंस्कारपक्षे । पदसंस्कारपक्षे तु वन्ध्याशब्दस्य सुतशब्दस्य च मुख्यार्थमादाय प्रातिपदिकत्वे जाते, ततो मुख्यार्थबाधं तात्पर्यानुपपत्तिं वा हेतुमादाय लक्षणा कर्त्तव्या । 'गां पाठ्य' इत्यादावपि सैव सरणिराश्रीयते । अतो बौद्धार्थस्वीकारं विनापि तत्र प्रातिपदिकत्वे सिद्धे तस्य प्रातिपादिकत्वसिद्धिरूपं प्रयोजनकल्पनं व्यर्थमेव । 'अर्थवत्सूत्रे' वृत्तिमत्त्वरूपमर्थवत्त्वम्, वृत्तिश्च शक्तिलक्षणाव्यञ्जनान्यतमरूपेति प्राचां मतेन शशशृङ्गादीनामसम्भवरुपलक्ष्यार्थघटितानां प्रातिपदिकत्वे न कापि बाधा । लघुशब्देन्दुशेखरेऽजन्तपुल्लिङ्गेऽर्थवत्सूत्रे नागेशेनापि-"एतत्संज्ञाफलभूत-

विभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वमर्थवत्त्वमित्यङ्गीकृतम्"। तच्च यथा 'गां पाठ्य' इत्यादावस्ति तथा शशशृङ्गादावपि, इति । शशशृङ्गादिपदानाममभिधयैव प्रातिपादिकत्वसिद्धिरस्य ग्रन्थस्य चतुर्थाध्याये निरूपिता ।

अथवा "कृत्तद्धितेतिसूत्रं नियमसूत्रं स्याद् इति न्यायकौस्तुभे शब्दपरिच्छेदे (पृ.६७२) । अर्थवत्त्वम् अर्थस्मारकवृत्तिमत्त्वमत्र वृत्तिमदविषयक-प्रतीत्यविषयत्वस्वरूपं स्यात् । तद्वृत्तिमत्समुदायेऽपि वर्ततेऽवयवेऽपि । अतः कृदन्तघटकप्रकृतेः कृत्प्रत्ययस्य चार्थवत्तया कृदन्तादेरर्थवत्ता सिद्धा । सुबन्ततिङन्तयोरप्यर्थवत्वात्तयोः प्रकृतिप्रत्ययोश्च वाक्यस्य च प्रातिपदिकसंज्ञावारणाय कृत्तद्धितेति सूत्रं नियमसूत्रम् । प्रकृतिप्रत्ययसमुदायस्य चेत्, प्रातिपदिकसंज्ञा कृत्तद्धितान्तयोरेव वाक्यस्य चेत् समासस्यैवेति ।

## (ल) बौद्धार्थे दोषप्रदर्शनम्

यत्तु नागेशमहोदयैरुक्तम्— "बौद्धार्थमादाय शशशृङ्गादिपदानां प्रातिपदिकसंज्ञासिद्धिः" तन्न । शशशृङ्गादिपदानामपदार्थैः सह शक्तिरूप-संबन्धग्रहो न भवति, तथैव बौद्धपदार्थैः सह । यदि बुद्धिविषयतया विशेषत उपस्थितेऽलीके शक्तिग्रहः क्रियते तत्र को दोषः ? अस्योत्तरं दीयते । बुद्धेरुल्लेखो यदि प्रत्यक्षरूपः स्यात्, तदा तस्मिन्नुल्लेखे विषयोऽप्युल्लिख्येत । न ह्येवम् । बुद्धेरनुल्लेखात् । ननु बुद्धिविशेषणत्वेनोपस्थितोऽर्थः स्वीकरणीयः । तन्न । न हि कश्चिदलीके व्यवहारोऽस्ति, येनोन्नीयमानायां बुद्धौ विशेषतः शशशृङ्गादिर्भासते । न च शब्दान्तरोपस्थिते शशशृङ्गादिपदसङ्केतग्रह इति वाच्यम् । शशशृङ्गोपस्थापकत्वेनाभिमतपदान्तरस्याप्यागृहीत- संगतिकत्वे-नाप्रतिपादकत्वात् । "ननु शशशृङ्गादीनामप्रसिद्धार्थानां तु शाब्दबोधो बुद्धिविषयत्वस्वरूपोपलक्षणधर्ममात्रं पुरस्कृत्य शक्तिग्रहणमपेक्षते । एवमुक्तं हि बौद्धार्थवादिभिः विशेषान्तरविनाकृतः कल्पनामात्रविषयोऽस्य वाच्यः" इति आत्मतत्त्वविवेके क्षणभङ्गवादे (पृ.७१) उक्तम् । भट्टनागेशादयः "विज्ञानवादसिद्धान्तवद् बाह्यवस्तु नास्ति" इत्यपि प्रतिपादयन्ति । मतमेतदयुक्तिकमवास्तविकम् । अस्य खण्डनावसरे महादेवपुणताम्बेकरो

न्यायकौस्तुभे शब्दपरिच्छेदे (पृ.६८०-६८१) समुद्घोषयति तर्कप्रमाणयुक्तमिदं तथ्यम्-"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, इति योगसूत्रे शशशृङ्गादिशब्दज्ञानजन्यो वस्त्वविषयको वृत्तिविशेषो विकल्प इत्यभिहितम् । एवं सति कूर्मरोमशशशृङ्गविकल्पयोरविशेषप्रसङ्गात् । न हि प्रवृत्तिनिमित्तस्याभावे कूर्मरोमो न शशशृङ्गपदार्थ इति वक्तुं शक्यम् । किं परम्, घटोऽपि प्रतिपत्तारः स्ववासनातो गृहीतशशशृङ्गशब्दादिसङ्गतिका इति । तदसत् । अतिप्रसङ्गाद् अनुभवं विना संस्कारापर्यायवासनाया असंभवाच्च" इति ।

वस्तुतो बौद्धार्थे स्वीकृतेऽपि शशशृङ्गपदस्याखण्डशब्दप्रतिपाद्यं लोके किञ्चिदपि न भवति । अतोऽत्र बौद्धार्थकल्पनाऽपि हास्यास्पदा लोकविरूद्धा च भवति । किञ्च पतञ्जलिना स्वीकृतो हि "लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः" । अतो बौद्धार्थवादिभिः शशशृङ्गपदवाच्यो लौकिकः कश्चिदर्थ एषितव्यः । अन्यथा बौद्धार्थवादमतं परास्तम् ।

कृत्तद्धितसूत्रे केचन तार्किकाः विधित्वं स्वीकुर्वन्ति । विधिसूत्रे सति शशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धिः । एतन्न युक्तिसिद्धमतोऽस्य प्रत्याख्यानं कुर्वता भट्टोजिदीक्षितेन शब्दकौस्तुभे (१-२-२, पृ. ४१९) अभिहितं हि- "यदि तु नैयायिकरीत्याऽर्थवत्त्वं वृत्तिमत्त्वं तच्च समासस्य नास्तीत्याश्रित्य समासग्रहणं विध्यर्थम् । तद्धितग्रहणस्य तद्विशिष्टपरतामाश्रित्य बहुपटवः इत्यस्य सुसाधुत्वात् । किन्त्वस्मिन्पक्षे सिद्धान्तविरोधो मूलकेनोपदंशं पचतकीत्यत्रातिप्रसङ्गश्चेति यथास्थितमेवास्तु" इति । अतस्तार्किकमते दोषः समापतति । अतो विधिपक्षो न समीचीन इति ज्ञेयम् ।

अत्र शशशृङ्गवन्ध्यासूतादिशब्दानां शक्तिग्रहः कथं संभवति । तच्चिन्तनीयम् । शक्तिग्रहस्तु व्याकरणोपमानकोशाप्तवाक्यव्यवहारादिभिः सम्पद्यते । न हि वृद्धव्यवहाराद् घटपटादीनां शब्दानां शक्तिग्रह इवैतेषां शशशृङ्गादिपदानां शक्तिग्रहः संभवति । नैते शब्दाः 'घटमानय पटमानय' इत्यादि प्रयोजकवृद्धव्यवहारवाक्यवद् योग्यतावन्तः । अतो लोके 'वन्ध्यासुतं भोजय' इति वाक्यं न केनापि प्रयुज्यते । न चापि कोशग्रन्थे सर्वेषा समस्तपदानां निवेशः । अतः शक्तिग्रहोऽत्र व्याकरणशास्त्रादेव संभवति ।

## (ए) शशशृङ्गादिपदेष्वलीकत्वेन वैयाकरणानां निर्वाहः

महावैयाकरणो दीनबन्धु झाऽपि स्वग्रन्थे समासशक्तिदीपिकायां (पृ. ३४) शशशृङ्गादिपदानाम्प्रातिपदिकत्वोपपत्तावर्थमलीकमपि स्वीकरोति, तैरुक्तम् –''नचालीकार्थनिरूपितशक्तिग्रह एव न संभवतीति वाच्यम् । अलीकादिपदेष्विव तत्संभवात् । 'अत्यन्ताऽसत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि'। न चैवं शशशृङ्गकूर्मरोमादिपदजन्यप्रतीत्योर्वैलक्षण्यमनुपपन्नमिति वाच्यम्, अलीकार्थकल्पनागतवैलक्षण्येनैव तद्वैलक्षण्योपगमात्'' इति । अतो बौद्धार्थकल्पनं निष्प्रयोजकम् ।

## (ओ) नव्यतार्किकाणामपि समाधानम्

असति पदार्थे सन्निकर्षव्याप्तिवृत्तीनामसत्त्वेन तत्प्रत्यक्षानुमितिशाब्दानामसम्भव इति न वाच्यम् । शब्दस्य तत्र वृत्तिसम्भवात् । एतेन पदेनालीकबोध्यमिति, वृत्तेर्वैयाकरणैरपि स्वीकारात् । एवं प्रसङ्गेऽत्र तार्किकस्तर्ककुतूहलकारः स्वग्रन्थस्य पञ्चमेंऽशे (पृ. २६५) प्रतिपादयति हि-''यत्तु सङ्गतिग्रहणाभावाच्छशशृङ्गादिपदानामेवोच्छेदेनेति बौद्धाधिकारवाक्यम् तदप्रमाकत्वाभिप्रायम् । अन्यथा सतोऽर्थानि च वासनावशादेव तैः समन्ताच्छब्दानां सङ्केते प्रतिपद्यते इत्यनेनैतदिणपरस्य शशादिप्रत्यकेपदार्थाव्युत्पन्नस्य शशविषाणादिपदात्तदर्थप्रत्ययप्रसङ्गादिति तद्वाक्यस्यैवानुपपत्तेश्च । एवमेवाद्वैतसिद्धौ अनन्वयनिश्चयदशायामेवाबोधकतोक्तेस्तद्विरहदशायामपि नाखण्डशशशृङ्गादिबोधकत्वं किन्तु सन्मात्रगोचरव्यधिकरणप्रकारकज्ञानं वा सदुपरागेणासद्गोचरज्ञानं वा केवलासद्भाने सामग्रीविरहात् ''इति । अत एव द्वितीयसूत्रे समासग्रहणं नियमार्थमिति वैयाकरणसिद्धान्तः संगच्छते । एवमेव शाब्देतरज्ञानविषयत्वाभावनियतानां शशशृङ्गादीनां विभक्त्यर्थैकत्वादिरूपसदुपरागणैव प्रत्ययः । अत्र तर्ककौतुहले पञ्चमेंऽशे (पृ. २६६) स्पष्टम्— ''प्राचीनमते भ्रमस्थले पुरोवर्तिविषयोपरक्तयोरिवात्यन्ताविद्यमानयोस्तादात्म्यसंसर्गयोस्तदुक्तं मणिकारैः 'सदुपरक्तस्यात्यन्तासतः ख्यात्युपगमात् सदुपरक्तस्याखण्डस्यात्यन्तासतः

ख्यातिरसत्ख्यातिर्नाभ्युपेयते कारणाभावात्' इति। एतेन 'शशविषाणमनुभवामि' इति प्रत्ययाभावादित्यपि निरस्तम् । 'ज्ञाततां विनापि शशविषाणादिविकल्पोपपत्तेः' इति लीलावतीवाक्ये शशविषाणादिविकल्पानामप्यनुभवोऽस्ति। न च तत्र लिङ्गमिति किमनुमापकं स्यादित्यर्थकतयोपायकृद्भिः व्याख्यातत्वात् । अत एव सम्बन्धिद्वयस्य सम्बन्धस्य च प्रसिद्ध्या तत्रैव ज्ञाततोपपत्तिरित्याऽऽशङ्क्य तया सत्यवस्तु विषयकत्वं न स्यादित्युक्तम्'' । एवं विवेचनेन बौद्धार्थो न सिध्यति।

## (ऐ) आधुनिकतार्किकाणां विवेचनम्

न च शशशृङ्गं नास्ति इति वाक्यजन्यशाब्दबोधान्यथानुपपत्त्या बौद्धार्थः सिध्यति, इति वाच्यम् । अत्र बौद्धार्थवादिनाम्मतं खण्डयन्पण्डितराजसुब्रह्मण्यशास्त्री शाब्दतरङ्गिण्यां (पृ. ८९)-''शशशृङ्गं नास्तीति वाक्याच्च शशविशेष्यकः शृङ्गाभावप्रकारको बोधो जायते । बोधविषयस्य शशस्य शृङ्गस्य तदभावस्य च प्रसिद्धत्वात् कथं बोधानुपपत्तिः, यद्यपि अत्यन्ताभावविषयकशाब्दबोधे सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारः कारणम्। प्रकृतवाक्ये च शशपदं न सप्तम्यन्तम् । तथापि शशशृङ्गादिपदजन्यपदार्थोपस्थितिमूलकः शशे शृङ्गाभाव इत्याकारको मानसबोधो जायते । तादृशमानसबोधजननेच्छयैव व्युत्पन्नाः शशशृङ्गं नास्तीति प्रयुञ्जते । स्पष्टं चेदभिहितम्, व्यधिकरणधर्मावच्छिन्नाभावखण्डने 'शशशृङ्गं नास्तीति च शशे शृङ्गाभावः, इत्यर्थ इति मणिविवरणावसरे गदाधरभट्टाचार्यैः । शाब्दबोधे विषयस्याकारणत्वात्, न च ज्ञानसामान्ये विषयः कारणमिति वाच्यम्। अतीतानागतादिविषयकपरोक्षज्ञानोदयेन तथा कार्यकारणभावस्य वक्तुमशक्यत्वात् । न चातीतादिस्थलेऽपिबौद्धार्थस्य सत्त्वान्न कार्यकारणभावानुपपत्तिरिति वाच्यम् । बौद्धार्थसाधनावसरे सिद्धवत्तया कथनस्यासङ्गतत्वात् । तस्मात् 'शशशृङ्गं नास्ति' इत्यादिवाक्यजन्यबोधानुपपत्त्या न बौद्धार्थः सिध्यति'' इति विवेचयति । अस्माकं मतेऽत्र कौण्डभट्टस्य समाधानमुचितम् । तत्तु चतुर्थाध्याये निर्णीतम्।

## ७. पदस्थवर्णानां पौर्वापर्य्यं न बौद्धम्

ननु 'इको यणचि' (६-१-७७) इति सूत्रे पौर्वापर्यव्यवहारो बुद्धिस्थ एव सम्भवति, तस्माद् बौद्धार्थः सिद्धः। नैतद् भवितुमर्हति। अत्र तु 'इको यणचि' इति सूत्रप्रमाणेनोक्तम्, इकारोकारयोः पौर्वापर्य्यं न स्यात्, बुद्धावेव पौर्वापर्य्यम्। तन्न भवितुमर्हति। पौर्वापर्य्यन्तु बाह्ये जगति पदार्थानाम्भवति। इकारोकारयोरुच्चारणे प्रथमोक्तस्य पूर्वत्वम्, पश्चादुक्तस्य परत्वमिति ज्ञानमुच्चारितध्वनिना भवति, वर्णोच्चारणक्रिया न बुद्धिस्था, सा बाह्यजगति प्रत्यक्षम्, तत्र कालेनैव पौर्वापर्य्यं संघटते। लेखने तु दैशिकक्रमेण ज्ञायतेऽयं पूर्वः, अयमुत्तरः। अत एव भाष्यकृदाह- 'परः सन्निकर्षः संहितेति' (१/४/१०८) सूत्रे-

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः।

शब्देनार्थान्वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्॥

बुद्धिविषयमेव शब्दानां पौर्वापर्यम्। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यत्यस्मिन्नर्थे शब्द प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्णस्ततोऽयं ततोऽयमिति''। अत्र तु भाष्यकारः 'परः सन्निकर्षः संहिता' इति सूत्रस्थाने 'पौर्वापर्यमकालव्यवेतं संहिता' इति कथन्न स्यादिति मतमुपस्थाप्य तत्खण्डनं करोति। पौर्वापर्यं तु कालत एव निर्णीयते। कालज्ञानं तु बुद्ध्या भवति। वर्णानामुच्चरितप्रध्वंसित्वाद्, एककाल उच्चारणासंभवात्, कथं पौर्वापर्यज्ञानं संभवति। तत्समाधानमित्थं भवति। धीरो मनुष्य उच्चारणक्रियां बुद्धौ कृत्वा, अर्थात् उच्चारणक्रियया विषयस्योत्पन्नं ज्ञानं ज्ञात्वा, अनेनायं शब्द उच्चरितः तस्यायं वाच्योऽर्थः, (बाह्योऽर्थः) अस्यार्थस्य (बाह्यसत्तात्मकपदार्थस्य) अयं वाचकः शब्दः, (गौशब्दः) अस्मिन् शब्दे वर्णत्रयम्, ग् औ विसर्गश्च। अतो बुद्धिविषयस्यार्थस्य ज्ञानेन निर्णीयते, अयं वर्णः पूर्वः, अयमुत्तरः। अत्र शब्दः, पदार्थः, (बाह्यसत्तात्मकः) तज्ज्ञानम् चेति तत्त्वत्रयेण व्यवहारः प्रचलति। न ह्यत्र बुद्धावर्थो भवतीति कल्पनीयम्। स्पष्टं हि भाष्ये' वाच्यान् अर्थान् दृष्ट्वा' इति वचनम्। प्रसङ्गेऽस्मिन् यद बौद्धार्थवादिभिः भाष्यव्याख्यानं कृतं तद्दूषितम्। अत्र लेखनक्रियोच्चारणक्रिया च न हि बुद्धिमात्रे, अतो युक्तिरियमप्यसिद्धा। अनेन समालोचनेन ज्ञायते बौद्धार्थो न महर्षिपाणिनिसम्मत इति।

'इको यणचि' इत्यत्र पौर्वापर्यं शास्त्रसिद्धं बाह्यं सुस्पष्टं गृह्यते। इकः यण् अचि संहितायामित्येतद् रूपं बाह्यमेव शब्दानां पौर्वापर्यं तदेव बुद्ध्या

विषयीकृतेऽभीष्टसिद्धौ, बौद्धार्थवादस्वीकारे दुराग्रहमात्रमेव तत्स्वीकर्तॄणामिति सिद्धम् ।

## ८. आत्मा आत्मनिष्ठधर्माश्च बाह्यार्थाः न बौद्धाः

लोके पुत्रकलत्रद्रव्यादयो बाह्या एव पदार्थाः सुखजनका मनोग्राह्या बुद्धिविषया भवन्ति । एवमेव व्याघ्रसर्पादयो बाह्यार्था अनिष्टजनका भयजनकास्तेऽपि मनोग्राह्या बुद्धिविषया एव भवन्ति । तत्र कथमिव भयाद्यर्थानां बौद्धत्वम् ? बाह्यार्थसाक्षात्काराद् मनोग्राह्यतया बुद्धिविषयत्वेऽपि सुस्पष्टे ज्ञाने पुनस्तेषां बौद्धत्वाङ्गीकारे को हेतुरिति बौद्धार्थवादिन एव प्रष्टव्याः ? अस्मन्मते तूक्तरीत्याभीष्टसिद्धौ तत्तद्भयाद्यर्थानां बौद्धत्वस्वीकारस्यावश्यकतैव नोदेति । अत्र सविशेषं प्रष्टव्यो भवान्, आत्मा तु न बाह्यपदार्थः, अनुपलब्धेः । तज्ज्ञानार्थं किमात्मपदार्थस्य बौद्धत्वं स्वीकरोति ? आत्माऽस्ति, इति श्रुत्यर्थविचारे आत्मरूपस्य चार्थस्य बौद्धत्वस्वीकारे आत्मपदार्थस्यानित्यतापत्तिः, आत्मेतरपदार्थस्यानित्यत्वाद् बुद्धिरूपगुणपदार्थस्यात्मेतरत्वात् सूक्ष्मभौतिकत्वात्, बौद्धार्थभूतस्यात्मपदार्थ-स्याप्यनित्यत्वविनाशित्वसादित्वापत्तिर्दुवारा स्यात् । तथा शब्दाद्वैतवादो विवर्त्तवादश्च स्वप्नेऽपि न सिद्ध्यतः । नैयायिकमतानुसारं बुद्धिरात्मगुणोऽ-नित्य इति परमतस्वीकारेऽपि न निस्तारः । यतो ह्यात्मारूपस्यार्थस्य बौद्धत्वे बुद्ध्याधारको बुद्ध्याधेयोऽर्थः सिध्यति । न्यायशास्त्रे तु बुद्धेरधिकरणमात्मा भवति, एवं सर्वशास्त्रविरुद्धो बौद्धार्थः कथमपि न सिध्यति ।

## ९. निष्कर्षः

महर्षिपाणिनिनाष्टाध्यायीग्रन्थेऽर्थशब्दस्य संज्ञा न कृता, तस्माद् लोकप्रमाणादेवार्थशब्दस्यार्थो निर्णेतव्यः । लोके तु घटपटादिबाह्यपदार्था इन्द्रियग्राह्या बुद्धिविषया अर्थरूपेण गृह्यन्ते । नागेशभट्टाङ्गीकृतबौद्धार्थवादस्तु सर्वलोकप्रतीतिविरुद्धत्वाद्धेयः, महर्षिपाणिनेरनभिप्रेतश्चेति निष्कर्षः । तस्मात् शशशृङ्गादिपदानां प्रतिपदिकत्वसिद्ध्यर्थं कौण्डभट्टोक्तं लोकेऽर्थप्रतीतिजनकत्वमर्थवत्त्वमिति लक्षणानुसारं समाधानमुचितम् । तथा च नैयायिकमतेन लक्षणया निर्वाहः कर्त्तव्यः । अतः पाणिनिसम्मतो

लोकप्रमाणितोऽर्थो बाह्य एवेति निष्कर्षः सुधीभिराकलनीयः। एवमेव भयाद्यर्था अपि बाह्या एवानुभूतिविषया आत्मनिष्ठा भवन्ति। वर्णानामपि पौर्वापर्यव्यवहारो बाह्यसत्तयैव संगच्छति। आत्माऽपि बाह्यार्थ इति स्वीकरणेनैव वैयाकरणानां प्रक्रियासिद्धिः। अतः पाणिनिदृशा शब्दस्यार्थो बाह्यो लोके शास्त्रे च सर्वत्र सिद्धः, स एव सर्वैर्निर्मत्सरैः शाब्दिकशार्दूलैः स्वीकर्तव्य इति निष्कर्षः सिद्धः।

---

द्वितीयं पर्यालोचनम्

# महाभाष्याश्रितबौद्धार्थबाह्यार्थ-साधकयुक्तिसमीक्षा

वैयाकरणप्रमाणभूतपातञ्जलमहाभाष्यांशाश्रितयुक्तीनां त्रयोदशशीर्षकेषु समीक्षणमस्मिन्नध्याये संक्षिप्तरूपेण प्रस्तूयते ।

## १. बाह्यार्थस्य महाभाष्यकृदभिमतत्वं बौद्धार्थवादस्यानभिमतत्वञ्च

शाब्दबोधस्य विषयो योऽर्थः किन्तस्य स्वरूपम् ? एतदेवात्र व्याकरणस्याचार्यपरम्परामनुसृत्य तद्विषयकाचार्ययुक्तीनां विवेचनं विधाय मुनित्रयसम्मतः सिद्धान्तो निर्णीयते । तथा च केचन शाब्दिका बौद्धार्थवादं मुनित्रयसम्मतं प्रतिपादयन्ति, तेषां युक्तीनां विवेचनाप्यत्राध्याये स्फोरिता, तथा चार्थो बाह्य एवेति पतञ्जलिसिद्धान्तो यथास्थानं सोपस्तम्भं प्रतिपादयिष्यते । "न च सत्तां पदार्थो व्यभिचरति" इति महाभाष्यम् (५/२/९४) आधारीकृत्य वाक्यपदीयतट्टीकासु सम्बन्धसमुद्देशे (३९-४२) बौद्ध एवार्थः शाब्दबोधस्य विषयो न बाह्यार्थ इति पतञ्जलिसिद्धान्तो निर्णीतः । स च कैयटनागेशादिभिः प्रदीप उद्द्योते च यत्र तत्र (१/१/१, १/३/२, १/४/१०८, २/२/६, ३/१/२६, ४/१/३, ५/ १/५९ ५/२/६४, ५/२/९४, १/४/२४,) प्रतिपादितः । किन्तु महाभाष्यावलोकनेनायं वादो भाष्यकारसम्मत इति न प्रतिभाति । तत्र त्वयमा-रोपित एव प्रतिभाति । महर्षिः पतञ्जलिः पाणिनीयसूत्राणां कात्यायनस्यान्येषाञ्च वार्त्तिकाणां च भाष्यं व्यरचयत् । प्रक्रियाप्रदर्शने दार्शनिकतर्कपद्धत्या प्राञ्जलमनोरमभाषया चाशुद्धमतप्रत्याख्यानपूर्वकं सूत्राणां

व्याख्यानं विधायार्थतत्त्वविषये तेन कृतो महान् उपकारः। तथा महाभाष्यकृतव्याख्यानप्रपञ्चेन पूर्वपूर्वमुनिकृते यत्ने शब्दानामल्पत्वाद् या विप्रतिपत्तिर्जायते सा विनश्यति । अत एव उत्तरोत्तरमुनितात्पर्ये एव पूर्वमुनीनामपि तात्पर्यम्मत्वा यथोत्तरं मुनीनां प्रामाण्यम् इति समुद्घोषयन्ति शब्दशास्त्रविदः । अतोऽर्थसत्तानिर्णये महाभाष्यं परमं प्रमाणं शाब्दिकानामिति न केनचिदपलापयितुं शक्यते ।

भट्टनागेशेन महाभाष्यप्रदीपोद्योते प्रवाहनित्य इत्यस्य व्याख्यानावसरे(१/१/१ पृ. ३२) शाब्दबोधस्य विषयो बौद्ध एवेति स्वीकृतम् । यथोक्तम्-''ननु शशशृङ्गादिपदार्थानां कथं नित्यत्वं तेषां स्वरूपस्यैवाभावादत आह-बाह्यपदार्थो न शाब्दबोधे विषयः किन्तु बौद्धः । स च प्रवाहनित्यः'' इति । अतः 'न बाह्यार्थः शाब्दबोधस्य विषय' इति सिद्धान्तोऽत्र बौद्धार्थवाद इति नाम्नाऽभिधीयते । अयं बौद्धार्थवादो भर्तृहरिहेलाराजकैयटनागेशादिभिः शाब्दिकैः सिद्धान्तरूपेण स्वीकृतः । तथा च तेषाम्मतेऽयं बौद्धार्थवादः सूत्रवार्त्तिकभाष्यकृद्भिरङ्गीकृत एवासीत्, तन्न । बौद्धार्थे सूत्रवार्त्तिकभाष्यकृदनभिमतत्वप्रतिपादनाय बौद्धार्थवादिनां युक्तीनां प्रत्याख्यानाय चेह प्रयत्नो विहितः । अस्मिन्नध्याये सर्वत्र वैयाकरणदृशा बौद्धार्थवादस्य प्रत्याख्यानं विधाय न्यायमीमांसादिशास्त्रेणापि तस्य विहितं खण्डनं समाकलितम् ।

बौद्धःशब्दः, बौद्धोऽर्थ इति बौद्धार्थवादिभिः भर्तहरिहेलाराजादिभिरुच्यते, तत्सिद्धये तन्मते सत्ता द्विविधा, बाह्यौपचारिकभेदात् । तथा च शास्त्रप्रक्रिया लोकप्रक्रिया च बौद्धशब्दार्थाभ्यां निर्वाह्यत इति बौद्धार्थवादिवैयाकरणानामाशयः । अत्रेदं वक्तव्यम्, किमिदं मतं मुनित्रयसम्मतं न वेति समीक्ष्य निर्णेतव्यम् । तत्र बौद्धशब्दार्थवादी आह-शब्दार्थौ बौद्धौ मुनित्रयशास्त्रसिद्धत्वात् (हेतुमति च ३/१/६, परः सन्निकर्षः संहिता १/४/१०८, उपदेशेऽजनुनासिक इत् १/३/२, नञ् २/२/६, तदस्यास्त्यस्मिन्निति मतुप् ५/२/९४ इति सूत्रभाष्यसिद्धत्वात्)

## २. महाभाष्यग्रन्थेन बाह्यार्थसाधनम्

अत्रोच्यते -उक्तसूत्रभाष्येषु शब्दार्थयोर्बौद्धत्वं कुत्रापि सुस्पष्टं नैवोक्तम्, प्रत्युत वाक्यपदीये भर्तृहरिणा शब्दार्थस्वरूपविवेचनविषयमादाय

कानिचिन्मतानि संगृहीतानि, स्वसमकालिकप्रचलितानि विभिन्नानि मतानि विवेचितानि । किञ्च तानि सर्वाणि भाष्यसम्मतानीति न क्वापि तेन स्वग्रन्थ उक्तम्, किञ्चातिगभीराशयस्य भाष्यस्येदं वाक्यपदीयं प्रामाणिकं व्याख्यानमिति लोकप्रवादोद्वेलितबुद्धिभिः कैयटपादैः सर्वं वाक्यपदीयं भाष्यव्याख्यानं मत्वा बौद्धशब्दार्थवादोऽपि भाष्यसम्मत इति प्रौढ्या प्रयतितम् । किञ्च तत्र भाष्ये बाह्यौ शब्दार्थौ, इत्यगतिकगत्या स्वीकृतावेव । तथा चाद्वैतवादित्वादद्वैतमतवासनया कैयटानुरोधेन च तत्रभवन्तो नागेशभट्टपादा अपि महत्यारभट्या बौद्धार्थवादं पदपदार्थयोस्तादात्म्यसिद्धये शब्दस्यापि बौद्धत्वं साधयितुं विशेषतः प्रयतितवन्तः, किन्तु सूक्ष्मदृशा तदुक्तमतसमीक्षया नागेशभट्टाः स्वमतसाधनकर्मणि सफलाः न सिध्यन्ति।

कथञ्चित्तदुक्तिप्रमाण्यमङ्गीकृत्य शब्दार्थयोबौद्धत्वस्वीकारेऽपि शब्दार्थयोः बौद्धार्थसाधकपूर्वोक्तसूत्रभाष्येण भाष्यान्तरविरोधाद् भगवति भाष्यकृति वदतो व्याघातदोषापत्तेः, नागेशकृतस्य स्वमतसाधकव्याख्यानस्यापव्याख्यानत्वमेव सिध्यति ।

केन भाष्यान्तरेण विरोध इति चेद्, उच्यते- स्वं रूपमिति (१/१/६८) सूत्रभाष्येण । इदमिह भाष्यम्- "गामानय दध्यशानेत्यर्थ आनीयते अर्थश्च भुज्यते" इति । अर्थस्य बौद्धत्वस्वीकारे गलबिलाधःपातनानुकूलहस्तचालनचर्वणरूपक्रियया बाह्यया कारकान्वयासंभवात् । एवमेवानयनानुकूलबाह्यशरीरव्यापाररूपक्रिययाऽपि कारकान्वयासंभवात्, अत्र भुज्यमान आनीयमानश्च बाह्य एवार्थो भाष्यकृतामभीष्टः, इति सुस्पष्टं गम्यते ।

ननु यथा कारकरूपोऽर्थो बौद्धः, एवमेव क्रियारूपोऽपि बौद्धः, तथात्वे चान्वयः सुगम इत्युच्यते चेत्, तदपि न विचारचारु । शास्त्रीयफलरूपे निष्पन्नेऽपि यद्वा शास्त्रीयप्रक्रियानिर्वाहेऽपि वस्तुतस्तादृशार्थेन बुभुक्षाद्यनिवृत्तेः, शब्दप्रयोग एव कृताकृतः स्यात् वक्तृप्रयोजनासिद्धेश्च । सर्वस्यापि शब्दप्रयोगस्य वक्तृप्रयोजनसिद्ध्यर्थकत्वात्, प्रयोजनासिद्धौ, सर्वोऽपि बौद्धशब्दार्थव्यापारोऽकिञ्चित्करः, अतः शब्दार्थयोर्बौद्धत्वन्न तर्कसम्मतं नापि महाभाष्यसम्मतमित्यपक्षपातया धिया बौद्धार्थवादिनाऽपि स्वीकर्त्तव्यमेव ।

ननु बाह्यया क्रियया बुभुक्षानिवृत्तिरपि भविष्यति, इत्यपि न वाच्यम् । बाह्यसत्ताया बौद्धार्थवादिभिरस्वीकारात् । यथोक्तम्-

१. बुद्धिशब्दौ प्रवर्तेते यथा भूतेषु वस्तुषु ।
तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ।। वाक्यपदीयं ३/३/११०.

२. ''एवं चानया एव सत्तया पूरिते व्यवहारे यद्यर्थक्रियाकारणादिना काष्ठबुसप्रायेण केनचिन्निबन्धेनान्यसत्ता कल्प्यते, तद्वर्धतां सा, न तत्र चिन्ताऽस्माकम्, व्यवहारे तु तस्या नास्त्यनुप्रवेशः'' इतिहेलाराजव्याख्या ३/७/३९ ।

३. तथा च कैयटोऽपि-''यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्, तदा वृक्ष इत्यतः सत्तावगमाद् अस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात् । नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाऽप्रसङ्गः । अङ्कुरो जायते, इति प्रयोगो न स्यात्, सतो जन्मविरोधात् । उपचारसत्तायां त्वेते दोषा नावतरन्ति'' इति प्रदीपे ५/२/२.

४. एवमेव नागेशपादैरुक्तम्-''शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताऽऽविष्टः'' इति लघुमञ्जूषायां बौद्धार्थनिरूपणे (पृ-२२२) । ननु बाह्यसत्ताया अस्वीकारः शाब्दबोधविचारस्थले एव नान्यत्रेति पशपशायां शब्दविचारप्रकरणिकभाष्येणैव सिद्धम् । न सिद्धम्, प्रतीतपदार्थको ध्वनिः शब्द इति भाष्याशयानवबोधाद् व्याख्यातारो भ्रान्ताः । वस्तुतस्तु बुद्धिमान्द्यादिदोषरहितत्वे सति संस्कारोद्बोधे न कथमपि व्युत्क्रमो भवति । अतः संस्कारव्युत्क्रमे बुद्धिमान्द्यादेरेव हेतुत्वं न तु स्वरूपसम्बन्धेन संस्कारव्युत्क्रमः । अतो बौद्धशब्दो बौद्धोऽर्थ इत्यादि-कल्पनसाम्राज्यस्यावश्यकतैव नोदेति । न च परमतप्रवेशो वाच्यः, नापि संस्कारोद्बुधः शब्दो नैयायिकस्यैव पक्षो विनिगमनाविरहात् । बुद्धिमान्द्यादिसत्त्वे तु वक्तृबौद्ध्रोरुभयोरपि बौद्धार्थसिद्धान्तस्वीकारेऽपि यथार्थबोधो दुर्लभ एव । नैयायिकवैयाकरणयोः समान एवायं सिद्धान्तः ।

### ३. बाह्यार्थसाधने शब्दप्रमाणम्

'महाभाष्यकारमतेन शाब्दबोधस्य विषयो बाह्यार्थो न' इति तुष्यतु दुर्जनः, इति न्यायेन यदि स्वीक्रियते, कथं तर्ह्यर्थस्य बाह्य इति विशेषणं

तैरग्रलिखितवाक्येषु प्रयुक्तम् ? अस्मत्सिद्धान्तसमर्थने इमानि भाष्यस्थलान्यपि प्रमाणभूतानीति विचारयन्तु विद्वांसः।

१- "न हि तर्हीदानीमिदं भवति पुरुषस्य राजेति, भवति राजाशब्दात्तु तदा प्रथमा । न तर्हीदानीमिदं भवति, राज्ञः पुरुषस्येति । भवति बाह्यमर्थमभिसमीक्ष्य" इति महाभाष्ये २/३/५० ।

२- "एषा बाह्यमर्थमपेक्ष्य भवति" इति महाभाष्ये २/२/११ ।

३- "भवति बाह्यमर्थमपेक्ष्य षष्ठी" इति महाभाष्ये २/२/२४ ।

४- "भवति बाह्यमर्थभिसमीक्ष्य" इति महाभाष्ये २/२/५० ।

५- "भूम्नाति च लुक्प्राप्ते बाह्ये चार्थे विधीयतेऽजादिः" इति महाभाष्ये ४/१/८९ ।

अत्र 'बाह्यमर्थम्' इति पदद्वयेन शाब्दबोधस्य बाह्यार्थत्वमेव भाष्यकृद्भिः स्पष्टमङ्गीकृतमित्यत्र न संशीतिलेशावसरः । एतैः प्रमाणैर्बाह्यार्थवादः समर्थ्यते ।

## ४. महाभाष्यकारमतेन द्रव्यस्य शब्दार्थत्वम्

कः शब्दः ? इति शङ्कामवतार्य महाभाष्यकारेण तत्र प्रथमसमाधाने प्रतिपाद्यते हि- "किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः । नेत्याह । द्रव्यं नाम तत्" इति (पृ.३) । अत्र द्रव्यस्यार्थरूपता भाष्यकृद्भिरिष्यत इति स्पष्टं गम्यते । सास्नालाङ्गूलककुदखुरविषाणिनः पदार्थस्य श्रोतृभिन्नेन्द्रियग्राह्यत्वं कैयटेनाऽपि स्वीकृतम् । अत्र प्रसङ्गवशाच्छब्दार्थयोर्लोके यो भेदव्यवहारो दृश्यते, तत्र कैयटनागेशादीनाम्मतमादाय किञ्चिदुच्यते- अयं गौ, अयं शुक्लः, इत्यादिप्रयोगस्थले देवदत्तोऽहमितिवदर्थस्तु प्रत्यक्षेण गृह्यते , नाम तु न ज्ञातं भवितुमर्हति । यत्र नाम तु ज्ञातं नार्थः 'तत्रैतेषु बालकेषु को देवदत्त' इत्युक्ते, 'वृक्षारूढो यः स' इति प्रत्युत्तरद्वारेण ज्ञायते संज्ञासंज्ञिनोः सम्बन्धः । अन्यः शब्दोऽन्यश्चार्थो न तयोस्तादात्म्यं लोके गृह्यते । अयं गौर्न गवयः, नीलोऽयं न कृष्णः, इत्यादि स्थलेषु गवयादिपदव्यावर्तनद्वारेण निश्चयः क्रियत इति सिद्धम् ।

महाभाष्यकारेण शङ्कापरिहारवाक्यमिदं प्रपञ्चितम्-"किं पुनराकृतिः पदार्थः, आहोस्विद् द्रव्यम् ? उभयमित्याह" इति (१/१/१ पृ.२५)। इदमत्रवाधेयम् । किं द्रव्यम्, काऽऽकृतिः ? न च द्रव्यं बुद्धौ, न चाप्याकृतिः । बुद्धिविषयत्वं तयोर्निर्विवादम्। तस्माद् भाष्यकारमतेन बाह्य एवार्थ इति सिद्धम् ।

## ५. शाब्दबोधस्य विषयो बौद्धार्थस्तत्समीक्षा

शब्दार्थसम्बन्धनित्यत्वविचारप्रसङ्गे महाभाष्यकारस्य नित्यत्वपक्षो निपुणैः परामृष्टः । तत्र चं बौद्धार्थवादिभिः कैयटपादैः समुट्टङ्कितम्-"बुद्धिप्रतिभासः शब्दार्थो, यदा यदा शब्द उच्चरितस्तदा तदार्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वाद् अर्थस्य नित्यत्वमित्यर्थः" इति प्रदीपे (१/१/१ पृ. ३२) ।

अत्राथार्कारा बुद्धिरिति कैयटव्याख्यानस्यान्वीक्षा कर्त्तव्या । तथा चोद्द्योतकारः कैयटस्य तात्पर्यं वर्णयन्नाह "बाह्यपदार्थो न शाब्दबोधे विषयः किन्तु बौद्धः । स च प्रवाहनित्यः" इति उद्द्योते १/१/१ (पृ. ३२) । कोऽयं बाह्यपदार्थो भवतां मते नियमेन शाब्दबोधस्याविषयः ? यदि चासौ न शाब्दबोधस्य विषय इत्युच्यते,तर्हि कथमस्य सत्ताविषयकशाब्दबोधो जायते ? न च वक्तुं शक्नुमः 'न जायते' इति । "अस्त्युत्तरस्यां दिशि देवतात्मा, हिमालयो नाम नगाधिराजः, आसीत् संग्रहनामा व्याडिकृतो व्याकरणदर्शनग्रन्थ इदानीं नोपलभ्यते' इत्यादि वाक्यश्रवणानन्तरं शाब्दबोधो बाह्यपदार्थानां जायत एव । अतो बाह्यपदार्थः शाब्दबोधस्य विषयो नेति कथनं साहसमात्रम् । न च युक्तिभिः सिध्यति, न च भाष्यकारस्य तात्पर्यमिति सुधीभिराकलनीयम् ।

## ६. तार्किकदृष्ट्या बौद्धार्थस्य प्रत्याख्यानम्

यथाऽऽप्तवाक्यश्रवणाच्छाब्दबोधो भवति तथा प्रतारकवाक्यश्रवणादपि । यथा सत्यवाक्यश्रवणाच्छाब्दबोधः, तथा च मृषावाक्यादपि, सर्वतन्त्रसिद्धमेतत् । ज्ञानं द्विविधम्, निर्विकल्पकं सविकल्पकञ्च । विशेष्यविशेषणानवगाहित्वं निर्विकल्पकम्, अस्याशयस्तु यस्मिन् ज्ञाने विशेष्यप्रकारभेदो न भासते, तज्ज्ञानं निर्विकल्पकम् । यत्र ज्ञाने विशेष्यप्रकारसंसर्गा भासन्ते, तत् सविकल्पकमित्युच्यते । शाब्दज्ञानन्तु

नियमतः सविकल्पकम् । ज्ञानं स्वरूपतो विषयवत् । न हि निर्विषयं ज्ञानं संभवति । ज्ञानं पुनः स्वरूपतो निराकारं (आकाररहितम्) विषयाकारेणैव ज्ञानमाक्रियते ,साकारं भवति । तत्र विषयता पुनस्त्रिविधा, विशेष्यता प्रकारता तथा संसर्गता ।' दण्डीः पुरुषः' इत्याकारकज्ञाने पुरुषे विशेष्यता, 'दण्डी' इति ज्ञाने पुरुषो विशेष्यो, दण्डस्तु प्रकारः, दण्डपुरुषयोः संयोगसम्बन्धविशेष एव संसर्गः । विषयता विषये तथैव वर्तते, यथा पदार्थत्वं पदार्थे, कारणत्वं कारणे । 'ज्ञानं विषयी' उच्यते, विषयोऽस्य अस्तीति व्युत्पत्त्या ।

ननु शाब्दबोधस्य विषयो बाह्योऽर्थो नेति बौद्धार्थवादिनो वदन्ति । अत्रेदं चिन्त्यम्, सर्पो बिलं प्रविशतीति वाक्यश्रवणाद्यद्विशिष्टज्ञानं भवति, सर्पस्तस्य, विशेष्यः, बिलकर्मकवर्तमानकालिकप्रवेशानुकूलव्यापारजनकप्रयत्नस्तु प्रकारः समवायस्तु संसर्गः । 'विरही यक्षः रामगिरौ मेघाय कुटजकुसुमार्घ्यमार्पयत्' इति महाकविकालिदासकृतदूतकाव्यविशेष्यनायकविषयकादस्माद्वाक्यश्रवणाद् यद्विशिष्टं ज्ञानं जायते, विरही यक्षस्तस्य विशेष्यः, मेघोद्देश्यककुटजकु-सुमार्घ्यकर्मकातीतकालिकसमर्पणव्यापारजनकप्रयत्नस्तु प्रकारः समवायस्तु संसर्गः । अत्र स्पष्टमिदं, रामगिरौ विरही यक्ष आसीद् न वा, मेघाय कुटजकुसुमार्घ्यं समार्पयद् न वेत्यादयः प्रश्नाः शाब्दबोधायावान्तराः । विरहियक्षे शाब्दबोधस्य विशेष्यताऽक्षुण्णा । अत्र कालिदासकाव्यनायकविरहियक्षस्य विशेष्यत्वं नाम विषयताविशेष्यस्य किं स्वरूपम् ? मेघदूतकाव्ये शब्दश्रवणात् कीदृशः चार्थबोधः ? न हि काव्येषु नायकनायिकादयः चरित्राणि च नामकर्मसंस्कारेण संज्ञावन्ति भवन्ति, गुणैर्हि प्रापणीयानि भवन्ति । यथा लोक उद्देश्यद्वारेण संज्ञासंज्ञिसम्बन्धज्ञानं भवति, तथा काव्ये संज्ञासंज्ञिज्ञानं गुणकथनेन सम्पद्यते । उभयत्र संज्ञी वस्तुतो वर्तते न वेत्यन्यदेतत् । न संज्ञासंज्ञिज्ञानं तदपेक्षते । काव्यपाठकाले तु संज्ञिनः सत्ताविषयकप्रश्ना अवान्तराः रसानुभवायाप्रासङ्गिकाश्चेति काव्यप्रयोजनज्ञानाद् अवगम्यते । परञ्चैतावन्मात्रेण काव्यस्य नायकनायिकानां शाब्दबोधविषयस्य सर्वस्य वा बौद्धसत्ता न सिध्यति । न हि सत्ता द्विविधा वर्तते बौद्धा बाह्या च । सत्ता त्वेकैव भूतवर्तमानानागतकालादिविशेषणैर्विशिष्टा ज्ञानविषयतां याति । घट आसीत् घटोऽस्ति, घटो भविष्यति; इति वाक्यत्रय एकैव सत्ता कालविभागेन विशिष्टा त्रिविधा भासते, न घटस्वरूपे भेदो भासते । कालजन्यभेदोऽयं भासते । यथा देवदत्त आसीनः शयानो धावमानश्चात्र तिसृषु क्रियास्वेक एव देवदत्तः । क्रियाभेदात् तु देवदत्तस्यावस्थाभेदो न तु

देवदत्तस्य स्वरूपेऽयं भेदः,(पदार्थत्वं विषयत्वम् अभिधेयत्वमित्यनर्थान्तरम् ।) अतः सिद्धं विशेषेणानेन विवेचनेन बौद्धार्थकल्पनं न युक्तिसम्मतमिति ।

## ७. शब्दानां पौर्वापर्यव्यवहारो न बौद्धः

परः सन्निकर्षः संहितेति सूत्रभाष्ये (१/४/१०९ वार्त्तिके १०) पौर्वापर्यं विचारयता भाष्यकारेण समाहितम्- ''बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । इह च, एष मनुष्यः प्रेक्षापूर्वकारी भवति पश्यत्यस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं, तावद्वर्णस्ततोऽयमिति'' । अत्र भाष्याशयस्तु पदे वर्णानां पौर्वापर्यं, वाक्ये पदानां पौर्वापर्यं वा नेन्द्रियग्राह्यम्, परन्तु बुद्धिग्राह्यमेव । एवकारेण भाष्यकृद्भिरत्रान्ययोगव्यवच्छेद इष्यत इति स्पष्टम् । एतेन शब्दस्य तन्निष्ठपौर्वापर्यस्य वा बौद्धार्थत्वं भाष्यकृदङ्गीकृतमिति न सिध्यति । अत एवोद्द्योतकारस्य व्याख्यानम् ''बुद्धिविषयमिति, अस्य बुद्धिश्च शब्दविषयमित्यर्थः'' इति न समीचीनं प्रतिभाति । कैयटेनात्र स्वव्याख्याने (१/४/१०९ वार्त्तिके १०) सनिपुणमुपस्थापितम्- ''बुद्धिप्रकल्पितः सर्वः पौर्वापर्यादिसंनिकर्षादिव्यवहारः, इत्यर्थः '' । इदमत्रावधेयम् । न तावत् प्रत्यक्षाविषयत्वे सति बुद्धिविषयत्वमिति, एतावन्मात्रेण बुद्धिकल्पितत्वमिति सिध्यति । अन्यथा प्रत्यक्षागम्यस्यानुमानगम्यस्य गगने चन्द्रमास्पन्दादेर्बुद्धिप्रकल्पितत्वं स्यात्, न चैतदिष्यते । तस्मात् कैयटव्याख्यानमत्र हेयमितिति ।

### (अ) तार्किकमतेन क्रियायाः प्रत्यक्षत्वं पौर्वापर्यस्यापि

यथा महाभाष्यकृन्मते क्रिया न प्रत्यक्षग्राह्या, अनुमानगम्यैव । तथात्रापि पौर्वापर्यं न प्रत्यक्षग्राह्यम्, अपि चानुमानगम्यमेवेत्याशयो भाष्यकारस्येह प्रतिभाति । वस्तुतस्तु क्रिया प्रत्यक्षेणापि गृह्यते । 'वृक्षात् पत्रं पतति', इत्यत्र पतनक्रियां पश्यामि, न तु वृक्षात् पत्रं पततीत्यनुमिनोमि, इत्याकारिका सर्वलोकप्रतीतिः । तथैव 'राजा, जारा' इति शब्दद्वयश्रवणानन्तरं, प्रथमे पदे रेफस्य जकारपूर्ववर्तित्वम्, द्वितीये पदे जकारस्य रेफपूर्ववर्तित्वमिति ज्ञानं श्रावणप्रत्यक्षेणैवोपपद्यते, अतो मया श्रुतम् इति प्रयोगः सिध्यति, न चानुमितमिति । इत्थंप्रकारिका सर्वलोकप्रतीतिः । न तावत् पौर्वापर्यस्य

प्रत्यक्षाय पदार्थानामेककालावस्थानमावश्यकम् । अन्यथा नृत्याभिनयस्थले दर्शकैर्नृत्याङ्गीभूतमुद्राणामेककालानवस्थानान्नृत्यक्रियादर्शनन्तु अनुमानमेव स्यात् । नास्त्ययं नियमः सिद्ध एव पदार्थः पिण्डीभूतः प्रत्यक्षेण गृह्यते, न व्यापारात्मकोऽपिण्डीभूतः क्रमजन्मनां समूहात्मकः साध्यरूपः पदार्थः । अतः सिद्धं क्रिया तु प्रत्यक्षग्राह्यापीति ।

## ८. अभेदप्रतीतिद्वारा बौद्धार्थस्य प्रत्याख्यानम्

एको ह्यर्थः प्रमाणसंप्लवसम्भवादनेकैः प्रमाणैर्बुद्धिविषयतां याति । पर्वते धूमं दृष्ट्वा चैत्रेण वह्निरनुमीयते, तदनन्तरं स एव वह्निः पर्वतगतेन चैत्रेण प्रत्यक्षं गृह्यते, भवति च तस्य तत्राभेदप्रतीतिरीदृशी' यो वह्नि मया पूर्वं धूमेनानुमितः स इदानीं प्रत्यक्षेण गृहीतः ' इति । अत्रानुमितिप्रत्यक्षविषययोरभेदप्रतीतिश्चैत्रे । तथा च शाब्दबोधप्रत्यक्षयोः शाब्दबोधानुमित्योर्वा विषयाभेदः संभवति । 'अस्ति उज्ञयिन्यां महाकालमन्दिरमिति आप्तवाक्यप्रसिद्धिमवबुध्य, उज्ञयिनीं गत्वा, श्रोता यदा महाकालमन्दिरं पश्यति, तदा तु यन्मन्दिरं मया पूर्वं श्रुतं तत् प्रत्यक्षेणाद्य दृष्टमित्यभेदप्रतीतिः संभवति । अत्र कयोरभेदः ? शाब्दबोधप्रत्यक्षविषययोरभेदः न च प्रत्यक्षविषयस्य महाकालमन्दिरस्य बाह्यार्थत्वं भवता नाङ्गीक्रियते, स एव बाह्यार्थः शाब्दबोधस्य विषयोऽत्र । कस्माद्दोषात्तावद् बाह्यार्थस्य महाकालमन्दिरस्य शाब्दबोधविषयता त्यज्यते भवता ? अतः सिद्धम्, बाह्यार्थो हि शाब्दबोधस्य विषय इति ।

## ९. नञ्समासार्थोपपत्त्यर्थं बौद्धार्थः स्वीकृतस्तत्प्रत्याख्यानम्

नञ्सूत्रव्याख्यानावसरे (२/२/६) बौद्धार्थवादिभिः कैयटपादैर्बौद्धार्थो भाष्यकारसम्मत इति प्रतिपादनाय व्याख्यानमिदमभ्यधायि-''इदानीमभिप्रायं स्पष्टयितुमाह, एवं तर्हीति । नाञ्निमित्तेति । क्षत्रियादौ सादृश्यनिमित्ताध्यारोपितं ब्राह्मण्यं न तु तात्त्विकं नञ्प्रयोगेण द्योत्यत इत्यर्थः । यदि पुनरिति अर्थप्रत्यायनाय शब्दः प्रयुज्यते, स चेन्निवृत्तः किमर्थमसौ प्रयुज्यते ? एवं यथेति प्रतिषेधविषयप्रदर्शनाय बुद्ध्या ब्राह्मणार्थं निरूप्य तस्य

क्षत्रियादौ मुख्यसत्ताविरहप्रतिपादनाय नञ्सहितो ब्राह्मणशब्दः प्रयुज्यत इत्यर्थः'' इति।

कैयटव्याख्यानसाधुत्वसमीक्षणाय मूलभाष्यं (२/२/६) समुपन्यस्यते- ''एवं तर्हि स्वाभाविकी निवृत्तिः । ननु चोक्तं किं नञ् प्रयुज्यमानः करोतीति । नञ्निमित्ता तूपलब्धिः । तद्यथा, समन्धकारे द्रव्याणां समवस्थितानां प्रदीपनिमित्तं दर्शनम् । न च तेषां प्रदीपो निर्वतको भवति । यदि पुनरयं निवृत्तपदार्थकः किमर्थं ब्राह्मणशब्दः प्रयुज्यते । एवं यथा विज्ञायेतास्य पदार्थो निवर्तते इति । नेत्युक्ते सन्देहः स्यात्, कस्य पदार्थो निवर्तत इति तत्रासंदेहार्थं ब्राह्मणशब्दः प्रयुज्यते'' इति।

तत्र भाष्यकारो नञ्तत्पुरुषसमासस्यार्थविचारप्रसङ्गे पक्षत्रयमवतारयति, नञ्समासोऽयमुत्तरपदार्थप्रधानः, अन्यपदार्थप्रधानः, पूर्वपदार्थप्रधानो वा । प्रारम्भे पक्षत्रयं खण्डयन् प्रथमं पक्षं पुनरवतारयति सिद्धान्तयितुम्- 'नञ्निमित्ता तूपलब्धिः' इतिभाष्योक्तिः सुधीभिर्विवेचनीया । ब्राह्मण इत्युक्ते, अब्राह्मण इत्युक्ते, च यौ बोधौ भवतः, अवश्यं तयोर्भेदः स्वीकर्त्तव्यः । अब्राह्मणशब्दजन्या तु ब्राह्मणेतरबुद्धिः । तत्रावश्यं नाञ्निमित्तस्तु ब्राह्मणाब्राह्मणशब्दजन्यबोधभेदः । यथा जयः, पराजयः, इति शब्दद्वयजन्यबुद्धिभेदस्तु 'परा' इत्युपसर्गनिमित्तकस्तथैवात्राऽपि भवतु । प्रदीपोदाहरणद्वारेण स्पष्टमेव भाष्यकारोऽत्र नञोऽर्थमभावज्ञानजनकत्वं न त्वभावजनकत्वं स्वीकरोति । न च भाष्यकारेणाऽत्र मुख्यसत्ताविरहवत उपचरितसत्तावतोऽन्यस्य कस्यचित् पदार्थस्यारोपः प्रकल्पितः । न च मूलभाष्यादारोपो गम्यते । उपचारसत्तारोपमूलकव्याख्यानन्तु न भाष्यकारानुसारम्, तत्तु भर्तृहरिशब्दाद्वैतसिद्धान्तानुसारम् । वस्तुतो भाष्यकाराभिप्रेतो बौद्धार्थः स्यात् तर्हि नाधोलिखितभाष्यस्य (२/२/९) परिहासजनकता संगच्छेत ''-ननु चोक्तं किं नञ्प्रयुज्यमानः करोति ? इति । नञ्प्रयुज्यमानः पदार्थं निवर्तयति । कथम् ? कीलप्रतिकीलवत् । तद्यथा कील आहन्यमानः प्रतिकीलं निर्हन्ति । यद्येतन्नञो महात्म्यं स्यान्न जातुचिद्राजानो हस्त्यश्वं विभृयुर्नेत्येव ब्रूयुः'' इति।

तथा च प्रतियोगिज्ञानाधीनमभावज्ञानमिति भाष्यकारस्वीकृतमतं तत्राभावबुद्धिविचारप्रसङ्गे उपस्थापितैरुदाहरणैः सिध्यति । घटाभाववत्ताबुद्धिः घटवत्ताबुद्धेः प्रति प्रतिबन्धिका, तथा चापणे आसीनं काककृष्णवर्णमब्राह्मणं

लक्षणेन जानन् न ब्राह्मणोऽयमित्यध्यवसितुं शक्नोति । तदभाववत्ता-बुद्धेस्तद्वताबुद्धिं प्रति प्रतिबन्धकत्वात् । गच्छतश्चैत्रस्य भुजिक्रियाज्ञाने-नाब्राह्मणश्चैत्र इत्यध्यवसायः । न च गुणजात्यादिभिर्ब्राह्मणलक्षणमजानत एतादृश्यभावबुद्धिः संभवति । तस्मान्नञ्सूत्रकैयटव्याख्यानं भाष्यकारमते बौद्धार्थवादारोपेणदूषितमित्यत्र न संशीतिलेशावसरः ।

## (अ) अब्राह्मण इत्यस्यार्थविचारस्तार्किकदृष्ट्या

"नञर्थबोधकतया नञ्पदघटितः समासः, यथा अघटः पट' इत्यादौ । अत्र घटपदं लक्षणया घटसम्बन्ध्यर्थकम् । घटप्रतियोगिकमित्यर्थकम् इति यावन्नञ्पदं चान्योऽन्याभावे शक्तमेव" इति जयन्त आह न्यायमञ्जर्य्याम् (पृ.१४)। एवं च "घटप्रतियोगिकभेदवान्पट इति वाक्यार्थबोधः । अघटं भूतलमित्यादौ नञो घटभिन्ने लक्षणा । न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टजनके लक्षणा" इति जगदीशतर्कालङ्कारस्तर्कामृते शब्दखण्डे (पृ. ९१) प्रतिपादयति ।

वस्तुतस्तार्किकमते अघट इति घटत्वावच्छिन्नतादात्म्य-सम्बन्धावच्छिन्नप्रतियोगिताकाभावः । अघट इति पदस्य सर्वं घटाभेदाधिकरणं गृह्यते । तथैवात्र अब्राहमण इति तादात्म्यसम्बन्धा-वच्छिन्नब्राह्मणत्वावच्छिन्नप्रतियोगिताकाभावः । अयं त्वभावो ब्राह्मणभेद इति पदेनापि गृह्यते । यस्याभावः सोऽभावस्य प्रतियोगीत्युच्यते, येन सम्बन्धेन, स सम्बन्धोऽभावस्य प्रतियोगितावच्छेदकसम्बन्ध उच्यते । येन धर्मेणावच्छिन्नः सन् प्रतियोगी अभावबुद्धौ भासते, स धर्मोऽभावस्य प्रतियोग्यतावच्छेदकधर्म उच्यते। यथा भूतले घटो नास्ति, अत्र घटाभावपदार्थस्य प्रतियोगितावच्छेदकधर्मो घटत्वम्, प्रतियोगितावच्छेदकसम्बन्धस्तु संयोगः । तथा च वायौ रूपाभावप्रतीतौ रूपाभावपदार्थस्य प्रतियोगितावच्छेदकधर्मः रूपत्वम्, समवायस्तु प्रतियोगितावच्छेदकसम्बन्धः । तादात्म्यसम्बन्धावच्छिन्नाभावोऽन्योऽन्याभावः (भेदः) इत्युच्यते । तादात्म्येतरसम्बन्धावछिन्नोऽभावस्तु संसर्गाभाव इत्युच्यते । घटो जलं न, इत्यत्र घटे जलभेदो भासते । घटे जलं नास्ति, इत्यत्र तु घटे जलाभावः । अतोऽनेन मार्गेण नञर्थोपपत्त्यर्थं नोपचारसत्तासमाश्रयणीयेति सिद्धम् ।

यत्तु महाभाष्यकृद्भिरुक्तम् —''अब्राह्मणमानय इत्युक्ते ब्राह्मणसदृशमेवानयति, नासौ लोष्टमानीय कृती भवति'' (६-१-७१,६-१-१३५)। सत्यं तत्, परञ्च तावता 'अब्राह्मणः' इत्युक्ते ब्राह्मणेतरब्राह्मणभेदविशिष्टो गृह्यते, प्रसङ्गात् संदर्भाद् वक्तृतात्पर्यज्ञानाद्वा ब्राह्मणेतरजन आनीयते । यत्र नञाऽन्योऽन्याभावो गृह्यते, तत्र तस्यार्थेऽन्योन्याभावस्य प्रतियोगिसादृश्यरूपोऽर्थो न प्रविशति । घटः पटो न, इत्यत्र घटे पटभेदो भासते ।

नञर्थे प्रतियोगिसादृश्यं न भासते । तथा च घटोऽपटः, इति वाक्यश्रवणाद् घटे पटभेदः पूर्ववद् भासते । अत्र तादात्म्यसम्बन्धावच्छिन्नपटत्वावच्छिन्नपटप्रतियोगिताकाभावे प्रकारता, घटे तु विशेष्यता । न च पटभेदरूपप्रकारे पटसादृश्यरूपोऽर्थो वर्तते । चैत्रो न पचति, इत्यत्र पाकानुकूलवर्तमानकालिककृत्त्यभाववांश्चैत्र इति बोधः । घटे जलं नास्ति, इत्यत्र जलाभाववान् घट इति च बोधः । अनेन प्रकारेण नञ्प्रयोगोपपत्तिर्भवतु कोऽर्थः सिध्यत्युपचारसत्ताया उपपादनेनेति ।

## १०. एकस्मिन्भेदाभावाद् बाह्यार्थस्यासङ्गतिस्तत्प्रत्याख्यानञ्च

उपदेशेऽजनुनासिक इत् (१/३/२) इति सूत्रव्याख्याने बौद्धार्थवादिभ्यां कैयटनागेशाभ्यां प्रदीप उदद्योते च (१/३/२) लघुमञ्जूषायां बौद्धार्थनिरूपणे (पृ. २०४) च लिखितं हि -'' अत एव को देवदत्तः ? इति प्रश्ने, अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्त इति । तव तु एकव्यक्तौ भेदाभावादीदृश इत्यस्यासङ्गतिः, मम तु एतैः शब्दैर्यादृशोऽर्थो बुद्धौ प्रतिभासते तादृशो बाह्य इत्यर्थः । अत्र तु ईदृशतादृशशब्दाभ्यां तत्त्वेन प्रत्यभिज्ञाविषयत्वमुपलक्ष्यत इति बोध्यम्'' । एवमेव कश्चनाधुनिकोऽपि स्वकीये शोधग्रन्थे 'योगतन्त्र व्याकरणशास्त्रदृष्ट्या बौद्धपदार्थविमर्शे' (पृ. १६२) प्रतिपादयति ''-बौद्धपदार्थस्वीकारे तु कुण्डल्यादिपदे बौद्धदेवदत्तस्याभिधानादीदृशपदघटकेन शब्देन तस्य परामर्शाद् अयं देवदत्त इत्यनेन बाह्यस्योपस्थानान्नोक्तदोषः । अत एवात्र भाष्ये ईदृशतादृशशब्दाभ्यां बौद्धपदार्थस्यैव सत्ता स्थापिता वर्तते'' । एवञ्च नागेशेन प्रतिपादितो बौद्धार्थ एव शक्य इति शाब्दिकसिद्धान्तो निश्चीयते ।

अत्रोच्यते- 'उपदेशेऽजनुनासिक इत्' सूत्रे, गुणैः प्रापणमुद्देश इति भाष्यलक्षणस्य कोऽभिप्रायः ? न तावद् यथा पूर्वदेशविभागपूर्वकपरदेशसंयोगरूपगमनव्यापारेण या ग्रामप्राप्तिस्तथैव प्रापणमत्राभीष्टम् । प्रथमतो ज्ञानाविषयीभूतस्यार्थस्य तन्निष्ठव्यवच्छेदकगुणज्ञापनद्वारेण ज्ञापनमुद्देशः । तथा च कैयटः प्रदीपे (१/३/ २) आह-"प्रसिद्धधर्मोपादनेन यत् प्रतिपादनं न. स उद्देशः, ईदृश इति एतैः शब्दैः यादृशो बुद्धौ अर्थः प्रतिभासते तादृशो बाह्य इत्यर्थः" इति । अत्रेदं तत्त्वम्-अर्थस्य बुद्धौ प्रतिभासस्तस्य बुद्धिविषयतामात्रम् । तादृशोऽर्थो न वेत्यन्यदेतत् । रज्जौ सर्पप्रत्यक्षस्थले सर्पस्य ज्ञानविषयता त्वक्षुण्णा । न ज्ञानमप्रमेति तद्विषयस्य बौद्धार्थत्वं सिध्यति ।

अत्रोद्द्योतकारस्य यत् कथनं -"एतेन बौद्धार्थस्यैव शाब्दबोधे भानमिति दर्शितम्" न तत् सुविचारितम् । अत्र पुनरिदं चिन्त्यम्, क उद्दिश्यते ? अर्थ उद्दिश्यते । प्रकृते पाटलिपुत्रस्थो देवदत्त उद्दिश्यते । शाब्दबोधे स एव ज्ञानविषयो भवति यः पाटलिपुत्रे वर्तते । अन्यथा पाटलिपुत्रगमनान्तरं तत्र देवदत्तं दृष्ट्वा–उद्दिष्टःपुर्वे यो देवदत्त इदानीं स प्रत्यक्षेण ज्ञायते इत्याकारिकाऽभेदप्रतीतिर्न स्यात् । भवति चेत्याकारिकाभेदप्रतीतिरुद्दिष्टार्थस्य प्रत्यक्षानन्तरं । नेयमभेदप्रतीतिर्नियमेनाप्रमा भवति । यदि शाब्दबोधस्य विषयो बाह्यार्थ एव न स्यात्, कथं तर्ह्यभेदप्रतीतेः प्रमात्वम् ? देवानां प्रियस्य बौद्धार्थवादिनः का गतिरत्र ? अतः पतञ्जलिमतेन बौद्धार्थसाधनं निरस्तमिति ज्ञेयम् । तथा च महाभाष्यग्रन्थावलोकनेन निश्चीयते, नात्र शब्दार्थविचारप्रसङ्गस्तस्माद् व्याख्याकर्तृणां व्याख्यानमन्यथारोपितं सिद्धम् ।

बौद्धार्थवादिमते वर्तते तर्काणामभावो युक्तीनामप्यसिद्धिश्च । स्वसिद्धान्तदौर्बल्यं ज्ञात्वैव नागेशादिभिर्महाभाष्यकारकैयटयोर्नाम गृहीतम् । न च कुत्रापि महाभाष्यकारस्य भगवतो बौद्धार्थसाधिका सम्मतिरस्ति । अस्य सूत्रस्य भाष्यपठनेनैव ज्ञायते नेहार्थसत्ताविषयको विचारः । इह तूपदेशविषयको विचारो भाष्यकृता विवेचितः ।उपदेशस्यार्थद्वयं प्रथमस्तु प्रत्यक्षमाख्यानं, यथा-अगोज्ञाय गां सक्थनि कर्णे वा गृहीत्वा कश्चिदुपदिशति-अयं गौरिति इत्याकारकप्रत्यक्षमाख्यानमुपदेशः । द्वितीये तु गुणैः प्रापणमुद्देशः । यथा अदेवदत्तज्ञाय गुणैराहोस्विद् विशेषणैरुपदेशः । उपदेशक इहस्थः पाटलिपुत्रस्थं देवदत्तं गुणवर्णनेन वर्णयति -अङ्गदी

विचित्राभरण ईदृशो देवदत्तः । अत्र श्रोत्रा गुणकथनश्रवणेन देवदतस्य स्वरूपनुमीयते । विशेषणेन विशेष्यस्य ज्ञानं भवति सामानाधिकरण्यप्रयोगात् । इह कुत्र बौद्धार्थानुकूलं भाष्यकारमतं, विचारयन्तु विद्वांसः । अत्र ज्ञानप्राप्तेः प्रथमोपायः प्रत्यक्षेण प्रमाणेनापरोपायो गुणकथनेन शाब्दबोधेनेति सारः समाकलनीयः । अतो निश्चीयते बौद्धार्थे महाभाष्यकारस्यासम्मतिः । ननु मन्मते एकव्यक्तौ भेदो न भवति एकस्मिन्, त्वेक एव वर्तते, न द्वौ न बहुत्वं । विचित्रः प्रश्नस्त्वयं किं बौद्धार्थमते-एकस्मिन् एकोऽपि भवति, अनेकेऽपि भवन्ति? भेदोऽभेदोऽपि भवतः। न ह्येतादृशी विवेचना कुत्रचिदपि लोके गृह्यते । अर्थस्तु लोकत एवावगम्यत इति पूर्वमेव वैयाकरणसिद्धान्तैः प्रमाणितम् । अङ्गदीत्यादिभिर्बाह्यदेवदत्तस्य विशेषणैर्यज्ज्ञानं भवति तादृशो देवदत्त इति बुध्यते श्रोता । प्रत्यक्षज्ञानस्य परोक्षज्ञानेन यो भेदः स एवात्र भाष्यकारेणोदाहरणद्वयेन प्रदर्शितः । अतो नात्रावकाशो बौद्धार्थस्य । तस्माद् भाष्यमपि (१/३/ २) समुपन्यस्यते विदुषां विचारार्थम्-''प्रत्यक्षमाख्यानमुपदेशो, गुणैः प्रापणमुद्देशः, प्रत्यक्षं तावदाख्यानमुपदेशः । तद्यथा-अगोज्ञाय कश्चिद् गां सक्थनि कर्णे वा गृहीत्वोपदिशति-अयं गौः इति । स प्रत्यक्षमाख्यातमाह- 'उपदिष्टो मे गौः' इति । गुणैप्रापणमुद्देशः, तद्यथा-कश्चित् कञ्चिदाह देवदत्तं मे भवानुद्दिशतु इति । स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त इति । स गुणैः प्राप्यमाणमाह-उद्दिष्टो मे देवदत्त इति । लक्षणेन ह्युपदेशः । सङ्कीर्णावुपदेशोद्देशौ । प्रत्यक्षमाख्यानमुद्देशः, गुणैः प्रापणमुपदेशः । प्रत्यक्षं तावदाख्यानमुद्देशः । तद्यथा कश्चित् कञ्चिद् आह 'अनुवाकं मे भवानुद्दिशतु' इति । स तस्मायाचष्टे 'इषेत्वकमधीष्व' इति । स प्रत्यक्षमाख्यातमाह - 'उद्दिष्टो मेऽनुवाकस्तमध्येष्ये' इति । गुणैश्च प्रापणमुपदेशः । तद्यथा कश्चित् कञ्चिदाह-'ग्रामान्तरं गमिष्यामि पन्थानं मे उपदिशतु' इति । स तस्मायाचष्टे -'अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्योऽमुष्मिन् हस्तवामः' इति । स गुणैः प्राप्यमाणमाह -उपदिष्टो मे पन्था' इति । एवमेतौ सङ्कीर्णावुद्देशोपदेशौ'' इति । अत्र बोधस्य प्रकारद्वयं निर्दिश्यते । यत्रार्थः प्रत्यक्षं तत्रेन्द्रियादिभिर्बोधः, यत्र विषयः परोक्षस्तत्रानुमितिशब्दबोधादीनि प्रमाणानि सन्त्येवेत्यत्र न कश्चिद्विवादः । अतः कैयटनागेशव्याख्यानं दुष्टमित्यत्र न संदिहतामण्वपि ।

### (अ) न्यायशास्त्रीयसमाधानम्

न च कीदृशो देवदत्त इति प्रश्नोत्तरघटकस्येदृशपदस्य स्वारस्याद बौद्धार्थसिद्धिरिति वाच्यम् । नागेशमतमालोचयता शाब्दतरङ्गिण्यां पण्डितराजसुब्रह्मण्यशास्त्रिणा तर्कितं – "ईदृशपदात् समभिव्याहृतवाक्यप्रतिपाद्यधर्मविशिष्टविषयक एव बोधोऽनुभवसिद्धः, इति तत्पदस्य समभिव्याहृतवाक्यप्रतिपाद्यत्वोपलक्षितधर्मविशिष्टे शक्तिः । न तु एतत्सदृशे तथा बोधाभावात् । न च प्रकृतिप्रत्ययविवेचनेन, एतत् सदृशार्थकत्वं प्रतीयत इति वाच्यम् । 'घट चेष्टायामिति' धातोर्निष्पन्नो घटशब्दश्चेष्टावद्वावाचक इति भाति । परन्तु घटपदाद् घटत्वजातिविशिष्टस्यैव बोधात् तस्य घटत्वविशिष्टे शक्तिः, न तु चेष्टाविशिष्टे । एवमेव 'मयज्ञाने' इति धातोर्निष्पन्नो मायाशब्दोऽज्ञानवाचकः । यथोक्तमद्वैतसिद्धौ अज्ञानवादे ' न च मय ज्ञाने इति धात्वर्थानुसाराद् माया कथमज्ञानमिति वाच्यम् । घट चेष्टायामिति धातुजस्यापि घटशब्दस्य चेष्टावाचकत्वाभाववद्, अत्रापि ज्ञानवाचकत्वाभावाद् इति । एवञ्च देवदत्तव्यक्तेरैक्येऽपि ईदृशपदाधीनबोधोदयान्न तदनुरोधेन बौद्धार्थः स्वीकरणीयः" इति ।

महाभाष्येऽर्थतत्त्वविषयकस्थलानां बाहुल्यम् । तत्र कानिचिदेव स्थलानि अस्मिन्प्रबन्धे निदर्शनार्थं गृहीतानि । यथा महर्षिपाणिनिरचितं व्याकरणशास्त्रं चकास्ति अष्टस्वध्यायेषु, तथैव अष्टाध्याय्यां महाभाष्यम् । इतोऽग्रेऽध्यायक्रमेण महाभाष्यस्यार्थतत्त्वविषयकस्थलान्यर्थविचाराय सुस्थापितानि सन्ति । भर्तृहरिनागेशादिभिर्यो बौद्धार्थः प्रतिपादितः, स पतञ्जलिसम्मतो नवेत्यस्य विमर्शोऽपि समासेन विलिख्यते ।

## ११. वैयाकरणैरर्थस्वरूपविषये लोकप्रयोगानुसरणम्

अर्थज्ञानं लोके स्वभावतो विद्यते तथैव शब्दप्रयोगोऽपि । न हि व्याकरणशास्त्रेणैवार्थज्ञानम् । व्याकरणशास्त्रज्ञानं विनाप्यर्थज्ञानं भवति, शब्दप्रयोगोऽपि भवति । लोके शिष्टाः स्वभावतोऽर्थमुपादाय लोकव्यवहारसिद्धान् सार्थकान् शब्दान् प्रयुञ्जते इति महाभाष्यकारस्य सिद्धान्तः । यथा घटप्रयोजनाय घटनिर्माणकर्त्तुरावश्यकता तथैव न शब्दप्रयोगायार्थज्ञानाय वा शाब्दिकानामावश्यकतेति तत्रोपन्यासेन (१/१/१) समाहितम् । यथा हि "-घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह -'कुरु

घटं कार्यमनेन करिष्यामि' इति । न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाऽऽह-'कुरु शब्दान् प्रयोक्ष्ये' इति । तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते'' इति । अनेन तु शास्त्रं निष्प्रयोजनं ज्ञायते इति, न । व्याकरणशास्त्रं त्वन्यशास्त्रवल्लोकतोऽर्थप्रयुक्तानां शब्दानां प्रवृत्तिरिति ज्ञात्वैव धर्मनियमान्प्रतिपादयतीति भाष्येणाऽनेन (१/१/१) विज्ञायते -''लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः'' । शास्त्रं तु व्यवस्थापकं नियमकरणाद्, न तूत्पादकम् ।

''नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः'' (महाभाष्यम् (१/१/१) इत्युक्त्वा भाष्यकारेणार्थवतां नित्यानां शब्दानां नित्यैरर्थैः सह सम्बन्धोऽपि नित्य इति स्वीकृतः । अर्थस्यानर्थकस्य च ज्ञानं लोकाधीनं वर्त्तते । यथा लोके शब्दाः सार्थकाः निरर्थकाश्च वर्तन्ते, तद्वच्छास्त्रेऽपि 'वृद्धिरादैच्' सूत्रभाष्ये (१/१/१) प्रतिपादितमेतत् । यतो हि ''अनर्थकम्, इत्याह । कथम् ? 'यथा लोके' लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत् -देवदत्त गामभ्याज शुक्लां दण्डेन देवदत्त गामभ्याज कृष्णामिति । अनर्थकानि दशदाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डोऽधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः ''इति । अत्र लोकप्रयुक्तार्थग्रहणेन बाह्यार्थः सिध्यति । यत्र पदानां योग्यतावतां समूहोऽर्थवद्वाक्यम्, परस्परयोग्यतारहितानां पदानां समूहोऽनर्थकं वाक्यम् । अर्थवत्ता तु लोकत एव ग्राह्या । अतो लौकिकार्थग्रहणेन बौद्धार्थो न सिध्यति ।

## १२.लोकगृहीतबाह्यार्थे स्वीकृते बौद्धार्थो नावश्यकः

सूत्रकारेण पाणिनिना विरचितानि सूत्राणि समुपलभ्यन्ते, न च तत्र सर्वेषां तद्घटकपदानामर्थबोधाय सूत्रकृद्भिः संज्ञासूत्राणि प्रणीतानि । वृद्धिगुणसंयोगोपधाटिघुघादीनां कृत्रिमसंज्ञापदानां शास्त्रीयार्थावबोधार्थं संज्ञासूत्राणि समुपन्यस्तानि । न च समग्रसूत्राणां व्याख्यानमेतेषां कृत्रिमसंज्ञानां शास्त्रीयार्थावलम्बनमात्रेणैव सम्पद्यते । किं बहुना, संज्ञासूत्राणामपि व्याख्यानं लोकप्रयुक्तशब्दार्थाननाश्रित्य न संभवति । यथा ''हलोऽनन्तराः संयोगः'' इति संज्ञासूत्रे संज्ञिज्ञानम् अनन्तराः, इति पदस्य लोकप्रयुक्तार्थज्ञानमपेक्षते । न च हलः, इति पदे हल्प्रत्याहाररूपप्रातिपदिकघटकपदस्य शास्त्रीयार्थमात्रं गृहीत्वा सूत्रव्याख्यानं

संभवति। अत एवोक्तम् महाभाष्यकृद्भिः -"इह हि व्याकरणे ये वैते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते। पशुरपत्यं देवतेति, या वैताः कृत्रिमाष्टिघुघभादिसंज्ञास्ताभिः" (१/४/२३) इति। अतो ज्ञायते व्याकरणेऽर्थनिर्देशो लोकस्य शब्दव्यवहारं समाश्रित्यैव प्रवर्तते, न तु तन्निरपेक्षः। 'यदि शाब्दबोधस्य विषयो बाह्यार्थो न' स्यात्, तर्हि शास्त्रेऽर्थनिर्देशोऽपि नोपपद्येत। अस्ति व्याकरणशास्त्रम्, क्रियते चात्रार्थनिर्देशः, तस्मात् सिद्धमेतद् बौद्धार्थवादो न सूत्रवार्त्तिकभाष्यकृतां समादृत इति।

अलब्धगाधे महाभाष्ये वैयाकरणसिद्धान्तरत्ननिकषोपलभूते सर्वत्र बाह्यार्थः सुशोभितः प्रतीयते। तत्रार्थविषयकालोचनायां स्पष्टीभवति, घटनिर्माणकर्मणि यथा कुम्भकारो कर्तृत्वेन सर्वथा कर्तुं सक्षमो, न तथैव शब्दनिर्माणे वैयाकरणाः कर्तृत्वेन किमपि कर्त्तुं शक्नुवन्ति। वस्तुतो लोकतोऽर्थप्रयुक्तानां शब्दानामन्वाख्यानं वैयाकरणानां कर्म। शिष्टप्रयुक्तशब्दानां सिद्धयेऽस्य प्रकृतिप्रत्ययविभागकल्पकव्याकरणशास्त्रस्योपयोगः। अतो लौकिकशब्दसाधुत्वानुसारमेव पाणिनिकृतसूत्राणि कात्यायनादिकृतवार्त्तिकाणि शास्त्रप्रक्रियां साधयितुं सर्वदैवाभ्युपगच्छन्ति। अपि च शिष्टप्रयुक्तलौकिकशब्दो लोकविज्ञातः सूत्रवार्त्तिकैर्न सिध्यति, तर्हि चिन्तालवः शाब्दिकाः योगविभागकल्पनया गणपाठव्यवस्थापनेनाहोस्विद् अन्योपायैश्च तत्साधयितुं चेष्टन्त इति भाष्ये बहुत्र प्रदर्शितम्। लौकिकाः शिष्टास्तु बाह्यार्थमादाय शब्दान् प्रयुञ्जते, सर्वत्र बाह्यार्थग्रहणेनैव व्यवहारोपपत्तिः संजायते, इत्यादिना बाह्यसत्ताया एव प्रामाण्यं शब्दशास्त्र उपपद्यते। पतञ्जलिरपि स्वीचक्रे -"ग्रामशब्दोऽयं बह्वर्थः" इत्यत्र भाष्ये ग्रामशब्दः शालासमुदाये वाटपरिक्षेपे मनुष्येषु संस्थण्डलिक इत्यादिषु बाह्यपदार्थेषु समुपन्यस्तः प्राप्यते लोके। ये ये ग्रामपदस्यार्थाः महाभाष्यकृता निगदितास्ते सर्वे बाह्यसत्तासमाविष्टा एव, न बौद्धसत्तासमाविष्टाः। इत्यनेन निश्चीयते पतञ्जलिसम्मतोऽर्थो बाह्यसत्तायुक्त एव।

उच्चरितेन शब्देनार्थो गम्यते, अतः शास्त्रेऽस्मिन् शब्दार्थयोर्वाच्यवाचकभावसम्बन्धः स्वीक्रियते। तस्माच्छब्दः संज्ञा, अर्थस्तु तत्संज्ञीति सिद्धम्। अत एव महाभाष्यकृद्भिः (१/१/२२ वार्त्तिके २)

विलिख्यते-''यथा लोके, तद्यथा-गोपालकमानय, कटजकमानय इति यस्यैषा संज्ञा भवति स आनीयते'' इत्यत्र गोपालकसंज्ञाभिहितो जन आनीयते । नात्र बौद्धार्थस्यानयनप्रसङ्गोऽनभीष्टत्वात् । अतः सिद्धमेतद् लोकप्रसिद्धार्थ एव महाभाष्यकृद्भिरर्थशब्दः प्रयुज्यते । इह सर्वथाऽऽनयनक्रियायाः कर्मत्वं बुद्धिविषये बाह्यार्थ इष्यते, न तु बौद्धार्थे योग्यताभावात् । अतोऽर्थस्वरूपग्रहणे लोकप्रयोगानुसरणमेव शाब्दिकैर्निर्विवादं स्वीकर्त्तव्यम् ।

'प्लक्षन्यग्रोधौ' पदस्यार्थः कः ? इत्यत्र प्लक्षस्य प्लक्षत्वं, न्यग्रोधस्य न्यग्रोधत्वमिति वितत्य, लोकव्यवहारादेकपदार्थे उभयोः प्रयोगं स्वीकृत्य -प्रक्षरतीति प्लक्षः, न्यग्रोहतीति न्यग्रोध इति व्युत्पत्तिजन्यार्थस्याप्येकत्वात् प्लक्षो हि न्यग्रोधो न्यग्रोधो, हि प्लक्ष इति स्वीकुर्वन् लोकव्यवहारो ह्यर्थस्य निर्धारक इत्यङ्गीचकार महाभाष्यकारः (२/२/२९ वार्तिके १६-१८) ।

तथा च लोके यस्मिन्नर्थे यस्य शब्दस्य प्रयोगः सङ्घटते, तथैव शाब्दिकः साधयितुमर्हति । समाने विषये लोका विभिन्नान् शब्दान्प्रयुञ्जते, तत्र वैयाकरणानामपि लोकानुगमनं विना नान्या गतिः प्रतिभाति । यथोक्तम् -''समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति, समाने च काले वर्णे गौः कृष्णा इति भवति, अश्वो हेम इति, समाने च शुक्ले वर्णे गौः श्वेतो भवति, अश्वः कर्क इति'' (२/२/ २९ वार्तिके १३) । लोकस्वीकृतस्यार्थस्य शास्त्रे ग्रहणं न तु बुद्धिपरिकल्पितार्थस्य । एकशेषविधानप्रसङ्गे एकशेषविधानेनानेन किमनेकार्थाभिधानमिति शङ्कासमाधाने भाष्ये (१/२/६४ वा.२८) समुट्टङ्कितम् ''-तेनानेकार्थाभिधाने यत्नं कुर्वताऽवश्यं लोकः पृष्ठतोऽनुगन्तव्यः, केष्वर्थेषु लौकिकाः कान् शब्दान् प्रयुञ्जते ? इति । लोके चैकस्मिन् वृक्षः, इति प्रयुज्यते द्वयोः वृक्षौ, बहुषु वृक्षा इति । तर्हि लोकोऽवश्यं शब्देषु प्रमाणम्'' इति । अनेन ग्रन्थेन सिध्यति भर्तृहर्यादिभिः परिकल्पितार्थस्य बौद्धार्थस्य प्रामाण्यं शास्त्रे न संभवति । लोके शब्देन यद् गम्यते स एवार्थ इति स्वीकृत्य वैयाकरणानां शब्दार्थव्यवस्थाव्यवहारः प्रवर्तते । महाभाष्ये पदे पदे स्वीकृतमेतत्- ''लौकिकमर्थं सम्प्रत्याययति'' (१/४/४३) इति । ''अभिज्ञाश्च लौकिका एकत्वादीनामर्थानाम्''(१/१/३६) इति । ''लोके गौरित्ययमाह इति गोशब्दादितिकरणः परः प्रयुज्यमानो गोशब्दः स्वस्मात् पदार्थात् प्रच्यावयति'' (१/१/४३)'' इति ।

पाण्डित्यनिकषभूतपतञ्जलिः निर्णिनाय, ह्यर्थविषये तल्लक्षणे वाचने च शाब्दिका न समर्था भवितुमर्हन्ति । अतोऽर्थस्य स्वाभाविकमभिधानं तत्र स्वीकृतम् "अभिधानं पुनः स्वाभाविकम्" (१/२/ ६४ वा. ३४) । एवं तत्रोक्तम् "अर्थानादेशात्" (२/ १/१) । व्याकरणशास्त्रे शब्दानधिकृत्यादेशः प्रवर्तते नार्थान् । यथा संहितायामचि परतः 'इको यणचि' (६/१ ७७) सूत्रेण इक्स्थाने यणादेशो भवति । न च लोके पाकप्रसङ्गे तैलस्य स्थाने घृतादेश इव शास्त्र आदेशो भवति । वाक्ये पदं स्वकीयमर्थम्प्रकाश्योपरमते, न ह्येकस्मिन् वाक्य एकं पदमनेकानर्थान् ब्रूते । वाक्येऽर्थ एकेन पदेनोक्तः सन् पदेनान्येन पुनरुक्तो न भवति । अत एव उक्तार्थानामप्रयोग इति भाष्यकारोक्तिः (१/१/४३, २/१/ २०) सङ्गच्छते ।

सर्वेषां सत्तावतां पदार्थानां स्थितिर्बाह्यजगति, तज्ज्ञानाय पूर्वदर्शनमावश्यकमिति प्रत्यपादि । दर्शनान्तरं हि कामपि क्रियां प्रतिपादयितुं जनाः समर्थाः प्रेरिता उद्बोधिताः संलग्ना भवन्ति, यथा प्राह-"इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्ध्या तावत्कञ्चिदर्थं संपश्यति, संदृष्टे प्रार्थना प्रार्थितेऽध्यवसायोऽध्यवसाये आरम्भः, आरम्भे निवृत्तिर्निवृत्तौ फलावाप्तिः" इति (१/३/१४) । अत्रोक्तं दर्शनं बाह्यसत्तावतां पदार्थानामेव संभवति । बुद्ध्या यार्थप्राप्तिः सैव केवलं यदि व्यवहारे गृहीता तर्हि कालत्रयव्यवहारोऽसंभवः स्यात्, ज्ञानात् पदार्थाः पृथग् इति स्वीकर्त्तव्यम् । अत एव पदार्थानाम्प्रत्यक्षमादाय प्रत्यक्षकालिकसत्तामाधारीकृत्य कालत्रयस्य प्रयोगः सङ्घटते, अन्यथा ज्ञानस्य वर्तमानकालिकबोधत्वाद् व्यवहारे सर्वदा वर्तमानकालस्य प्रयोगापत्तिर्भवेद् इति । अत्र क्षिप्रवचने लृट् (३/३/१३३) सूत्रस्य भाष्यम् । यथा-"तद् यदेन्द्रियकर्म तदेता विभक्तयो, यदा बुद्धिकर्म तदा वर्तमाना भविष्यति" इति । इह सर्वपदार्थानां सर्वो व्यवहारो विवक्षानिबन्धनः । एवं भाष्याशयः प्रतिभाति, कालस्य क्रियाया अभावस्य कारकसम्बन्धस्य च सत्ता बुद्ध्याऽवगम्यते । इयं सत्ता बाह्येन्द्रियैः पदार्थवत् प्रत्यक्षं न गृह्यतेऽनुमानगम्यत्वात् । अनुमानव्यवहारस्तु बुद्ध्या प्रसज्यते । नैयायिकैरपि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नादीनां प्रत्यक्षमन्तरिन्द्रियेण मनसैव भवति, अतः प्रत्यक्षं द्विविधं सिद्धम् । न्यायप्रदीपे (षष्ठपरिच्छेदे पृ. ९१) यदुक्तम्- "प्रत्यक्षप्रमाकरणम्प्रत्यक्षप्रमाणम्, तच्चेन्द्रियमेव तच्चान्तरम्बाह्यञ्चेति द्विधा, मन आन्तरम्, चक्षुरादिर्बाह्यम् इति । अतोऽर्थोबाह्यःक्वचित्परोक्षस्थले बुद्धिगम्यः । दुःखेच्छादयोऽन्तरिन्द्रियग्राह्याः । बाह्येऽर्थोऽनेनाभिप्रायः

ज्ञानविषये। यो ज्ञानस्य विषयो भवति स बाह्योऽर्थः, इति मत्वैव शाब्दिकानां व्यवहारः प्रतिभाति । न चैकेन शब्देनैक एवार्थः सर्वत्र बुध्यते । सत्यपि शब्दाभेदे वक्तृप्रतिपाद्यार्थभेदः प्रकरणादिभेदाज्ज्ञायते । यथोदाजहार भाष्यकारः-

१- "ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्त्तते । तद्यथा, ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते, । तद्यथा ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्त्तते । तद्यथा-ग्रामो गतः, ग्राम आगत इति । अस्ति सारण्यके ससीमके स्थण्डिलके वर्त्तते, तद्यथा-ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत् प्रयुज्यते न अन्तराविमौ ग्रामौ" इति (१/१/२९ वार्त्तिके ११) ।

२- "एकशब्दोऽयं बह्वर्थः । अस्त्येव सङ्ख्यावाची । तद्यथा एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा-एकाग्न्यः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । अस्त्यन्यार्थे वर्तते- सघमादौ द्युम्न एकास्ताः । अन्या इत्यर्थः । तद्योऽन्यार्थे वर्तते, तस्यैष प्रयोगः" इति (महाभाष्ये १/४/२९) ।

३- "गुणशब्दोऽयं बह्वर्थः । अस्त्येव समेष्ववयवेषु वर्तते, तद्यथा -द्विगुणा रज्जुस्त्रिगुणा रज्जुरिति । अस्ति, द्रव्यपदार्थकः । तद्यथा गुणवानयं देशः, इत्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते । अस्त्यप्रधाने वर्तते । तद्यथा-यो यत्राऽप्रधानं भवति स आह-गुणभूता वयमत्रेति । अस्त्याचारे वर्तते । तद्यथा -'गुणवानयं ब्राहमणः' इत्युच्यते यः सम्यगाचारं करोति । अस्ति संस्कारे वर्तते । तद्यथा-संस्कृतमन्नं गुणवदित्युच्यते" इति (म. ५/१/११९) ।

४- एवमेव "अन्तशब्दोऽस्त्येवावयववाची । तद्यथा वस्त्रान्तो वसनान्त इति । अस्ति सामीप्ये वर्त्तते । तद्यथा उदकान्तं गतः, उदकसमीपं गत इति गम्यते" इति (म. ८/४/२०) ।

येन येनार्थेन सह शब्दस्य सम्बन्धो लोकव्यवहारे संभवति । तेन तेन शब्देन तत्तदर्थस्य ग्रहणं लोकसिद्धम् । यथा कृषिसम्पादनायानीतेन जलेन प्रयोजनभेदात् स्नानपानाचमनादिकार्याणि कुर्वन्ति लोकाः । तथैव शब्दोऽपि प्रयोजनभेदेन स्ववाच्यस्य सर्वस्यार्थस्य वाचको भवति । यथोक्तम् -"अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा -शाल्यर्थं कुल्या प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते, शालयश्च भाव्यन्ते । यदप्युच्यते -न

खल्वप्यन्यत् प्रकृतमनुवर्तनादन्यद् भवति, न हि गोधा सर्पन्ती सर्पणादहिर्भवति। भवेद् द्रव्येष्वेतदेव स्यात्। शब्दस्तु खलु येनाभिसम्बध्यते तस्य तस्य विशेषको भवति" इति (म. १/३/१२ वार्त्तिके ६, १/१/२२)

अतो जलवत् प्रयोजनवशाच् छब्दोऽनेकार्थैः सह युज्यते। परञ्च प्रसङ्गभेदादेकस्मादेव शब्दादनेकार्थानाम्बोधेऽप्यर्थस्य बुद्धितन्त्रता बुद्धिनिष्ठता वा न सिध्यति। अर्थस्य बुद्धिविषयता त्ववश्यं वर्तते।' देवदत्त अत्रागच्छ' इति वाक्यश्रवणाद्यस्य देवदत्तसंज्ञा तस्यैवागमनं वक्त्रा इष्यत इति बोधः संजायते। न हि बौद्धार्थस्यागमनं संभवति। किं तावद् बौद्धार्थत्वम् ? तदेव वक्तव्यम्। यदि बुद्धिविषयमेव बौद्धार्थत्वं, तर्हि नावयोर्विरोधः। अस्माभिरप्यर्थस्य बुद्धिविषयताङ्गीक्रियते। न च घटे जलमिव बुद्धावर्थो विद्यते, न्यायनये तु स्वरूपत आकाररहितं ज्ञानम्। याचितमण्डनन्यायेनैव ज्ञानस्य साकारता। विषयाकारं ज्ञानं, विषिण्वन्ति स्वात्मकतया विषयिणं ज्ञानं निरूपयन्तीति विषयाः। अत्र बौद्धार्थस्वीकारस्य नावकाशः।

बौद्धः शब्दः, बौद्धश्चार्थस्तयोस्तादात्म्यम् इति बौद्धार्थवादिनां युक्तिरपि भाष्यविरुद्धा। न च शब्दो बौद्धो न चाप्यर्थः, शब्देनार्थस्य ज्ञानम्। ज्ञानं बुद्धिः संप्रत्यय इत्यनर्थानन्तरम्। शब्दपूर्वकं ह्यर्थस्य ज्ञानम्। प्राक् शब्द उच्चार्यते तदनु तदर्थबोधः, यथा 'देवदत्त आगच्छ, इति वाक्येन देवदत्त आहूयते। यदा देवदत्तेन वाक्यं न सुष्ठु सुश्रुतम्, तर्हि सोऽर्थबोधाभावे पृच्छति-किं भवानाहेति। अतः सिद्धं शब्दश्रवणानन्तरमेवार्थस्य बोध इति। यथा भाष्ये (१/१/६७) वर्णितम्-"शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। आतःशब्दपूर्वकः योऽपि ह्यसावाहूयते नाम्ना। नाम च यदानेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति। शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः"। अत्रावधेयम्। यदि बौद्धार्थस्तर्हि सम्प्रत्ययः कः ? यदि चार्थो बहिर्न, तर्हि वक्तृणां वाक्यप्रयोगे रुचिर्न स्यात्। न चात्मनो बहिः श्रोता बुध्यते। अतः सर्वथा बौद्धार्थो नावश्यक इति प्रतिभाति, बाह्यार्थस्य सिद्धत्वात्। भर्तृहरिपादैः शब्दार्थयोः कार्यकारणभावसम्बन्धः समुद्घोषितः, स च पतञ्जलिभाष्यान्न सिध्यति। न च शब्दा अर्थानुत्पादयन्ति न वा विनाशयन्ति, अपि तु स्ववाच्यान् अर्थान् प्रकाशयन्ति। अतः शब्दाद् न कापि निवृत्तिरुपलब्धिर्वा।यदि च निवृत्तिः स्यात्, कथं न युद्धस्थले नेति ब्रुवन्तः राजानः शत्रुसेनाया निवृत्तिमनेन

निवृत्तिकारेण नञा कुर्वन्तीति विवेचनञ्चक्रुर्भाष्यकाराः -''यद्येतन्नञो माहात्म्यं स्यान्न जातुचिद् राजानो हस्त्यश्वं विभृयुर्नेत्येव राजानो ब्रूयुः'' इति (२/२/६)।

तथा च शब्दनिमित्तेनार्थज्ञानं समुत्पद्यते, यथा दीपे प्रज्वलिते समीपस्थपदार्थानां दर्शनं जायते, न च दीपः पदार्थान् जनयति । तस्माद्दीपस्य निमित्तत्वं सुस्पष्टम्, यथा बभाषे-''नञ्निमित्ता तूपलब्धिः, तद्यथा समन्धकारे द्रव्याणां समवस्थितानां प्रदीपनिमित्तं दर्शनं, न च तेषां प्रदीपो निर्वर्त्तको भवति'' (२/२/ ६)। अनेन शब्दस्यार्थज्ञानजनकत्वं सिध्यति । यथा दीपात् पदार्था भिन्नास्तथैव शब्दादपि शब्दार्थो भिन्नः । न चानेन तेषां तादात्म्यं भाष्यकारसम्मतं प्रतिभाति ।

महाभाष्यकारेण वृक्षशब्दस्य कोऽर्थः ? इति जिज्ञासासमाधाने व्यधायि-''बहवस्तेऽर्थाः मूलं स्कन्धः फलं पलाशमिति'' (१/४/२१) । इदमत्रावधेयम् । यदि च भाष्यकारसमादृतो बौद्धार्थस्तर्हि कथं तेषां निरुक्ता अर्था न बौद्धार्थत्वं प्रतिपादयति । अत्र कथिताः-मूलं फलं स्कन्धः पलाशमित्यादयो न बुद्धिसत्ताविष्टाः । एतेषां सत्ता बाह्येति निर्विवादम् । तस्मात् सिद्धन्न भाष्यकारसम्मतो बौद्धार्थः । अर्थज्ञानस्य च बुद्धिविषयत्वात् । अतो भाष्यकारे बौद्धार्थवादित्वारोपो वृथेति निश्चीयते ।

न च शब्दार्थयोरभेदः सम्बन्धो भाष्यकारसमादृतः । शब्दद्वैतवादस्य विवर्त्तवादस्य वा स्थापनार्थं भर्तृहरिणा शब्दार्थयोरभेदसम्बन्धः प्रत्यपादि । परञ्च भाष्यकारेण शब्दार्थयोर्भेदः स्वीकृतः । यथाह- ''एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति, तज्ज्ञापयत्याचार्यः 'अस्त्यन्द् रूपात् स्वं शब्दस्येति । किं पुनस्तत्, अर्थ इति'' (१/१/६८) । अतः सिध्यति भर्तृहरिमतं न मुनित्रयसम्मतम् । न च व्याकरणे शब्दाद्वैतवादस्यावश्यकता, न्यायमीमांसकपद्धतिरेव भाष्यकारसम्मतेति सिद्धम् । महाभाष्यकारमतेनार्थो बाह्यः साधितः । केचिदत्र बौद्धार्थवादिनो विवदन्ते-'व्याकरणशास्त्रे शास्त्रप्रक्रियार्थं बौद्धार्थः स्वीकर्त्तव्यः, स बौद्धार्थो महाभाष्यकारस्याभीष्टः इति । एतन्न समीचीनम्, भाष्यविरोधात् । सर्वत्रास्माभिः प्रदर्शितो बाह्य एवार्थः स एवार्थो मुनित्रयसम्मत इति । इहापि महाभाष्यकारस्यैकं वचनं पुनः प्रमाणत्वेन समुपन्यस्यते- ''इह च व्याकरणेऽर्थे कार्यस्यासंभवः । अग्नेर्ढग् इति न शक्यतेऽङ्गारेभ्यः परो ढक्कर्तुं'' इति (१/१/६७) इदमत्रावधेयम् । स्पष्टं हि भाष्यकारेणात्र व्याकरणशास्त्रेऽग्निशब्दस्याङ्गाररूपोर्थो निरूपितः ।

न चाङ्गाररूपोऽर्थोबौद्धो भवितुमर्हति । अतः शास्त्रप्रक्रियार्थमपि बाह्य एवार्थोऽङ्गीकार्यः । स एव बाह्यार्थस्तार्किकमीमांसकैरपि स्वीकृतः । अतो मुनित्रयविरूद्धबौद्धार्थस्य स्थापनाय वैयाकरणानां प्रयासो न शोभत इति सिद्धम् ।

महाभाष्याकारेणार्थस्य बाह्यमिति विशेषणं दत्तम् । अतो बाह्य एवार्थः सिध्यति । नन्वत्र बाह्यविशेषणेनार्थापत्त्या बौद्धार्थोऽपि भाष्यसम्मतः सिध्यतीत्युच्यते चेद् वयमपि बौद्धार्थं स्वीकुर्मः, किञ्च न तवाभीष्टं प्रत्युत बुद्ध्या विषयीकृतं बाह्यार्थमेव बौद्धार्थं स्वीकुर्मः । अत्रैव भाष्याशयः प्रदर्शितप्रमाणैः सिध्यति । अत एव तु परः सन्निकर्षः संहितेति (१-४-१०८) सूत्रभाष्ये-

"बुद्धौ कृत्वा सर्वाचेष्टाः कर्त्ता धीरस्तत्वन्नीतिः ।
शब्देनार्थान्वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्" ॥

इत्यत्र चेष्टादीन् क्रियार्थान् बाह्यान् बुद्धौ कृत्वा बुद्धिविषयतां नीत्वेत्येवं बाह्यार्थमेव बुद्धिविषयीकृतं बौद्धार्थं ब्रूते भगवान्भाष्यकार इत्यत्र न शङ्कापङ्कावसरः ।

## १३. निष्कर्षः

अध्यायेऽस्मिन् महाभाष्यकारस्य शब्दप्रमाणेन बाह्यार्थोऽभीष्टः, तथा च भाष्ये सर्वत्रैतेषाम्मते बाह्य एवार्थो दृग्गोचरीभवति न क्वापि बौद्धार्थ इति सप्रमाणं निर्णीतम् । कैयटनागेशयोः बौद्धार्थसाधकव्याख्यानं दूषितमित्यत्र न संदेहावसर इति सुस्थापितम् । अतो बौद्धार्थवादो मुनित्रयाऽसम्मतः सिध्यति । लोकव्यवहारादपि बाह्यार्थ एव पुष्णाति ।

---

तृतीयं पर्यालोचनम्

# वाक्यपदीयाधारितबौद्धार्थबाह्यार्थसाधकयुक्तीनां समीक्षा

व्याकरणदर्शनपरम्परायां बौद्धसत्तासाधकग्रन्थेषु प्रथमं स्थानं वाक्यपदीयस्य ग्रन्थरत्नस्य विद्यते । अस्मिन्नध्याये तत्र विराजितानां युक्तीनां पर्यालोचनं वितन्यते ।

## १. शब्दार्थयोस्सम्बन्ध उपचारसत्तावादस्तत्समीक्षा च

व्याकरणदर्शनपरम्परायां मूर्धन्यस्थानमधिरोहति शब्दाद्वैतवादी भगवान् भर्तृहरिः । अतो हि कैयटनागेशादिभिः प्रमाणत्वेन हरिकारिका सर्वत्र समुदाहृता । ग्रन्थोऽयं भगवतो भर्तृहरेरप्रतिमप्रतिभाभासकोऽर्थप्रक्रियाविषयकदार्शनिकतत्त्वानां गभीरविवेचको व्याकरणदर्शने मूर्धन्यतां प्राप्तश्चकास्ति । प्राग् अध्यायद्वये त्रिमुनिसम्मतोऽर्थो बाह्य इति सम्यग् विचारितम् । तत्र प्रतिपादित एवार्थः सर्वैः शाब्दिकैरङ्गीकार्यः । अत्र भर्तृहरेरनुमतसिद्धान्तोपस्थापनपूर्वकं तेषां युक्तीनां पर्यालोचनं क्रियते । तत्र हरेर्मुख्यसत्तातिरिक्तोपचरितसत्तासिद्ध्यर्थमुद्भावितानां तर्काणामुपस्थापनात् प्राक् तदीयो बौद्धसताया मूलभूतः शब्दार्थसम्बन्धविषयकराद्धान्तः प्रथमतो विचार्यते, येन बौद्धसत्ता साधिता ।

## २. शब्दार्थसम्बन्धविचार :

अयं सम्बन्धो द्विविधः-प्रथमस्तु योग्यतासम्बन्धः द्वितीयस्तु कार्यकारणसम्बन्धः । यथोक्तम्-

कार्यकारणभावेन योग्यभावेन च स्थिताः ।

धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु ॥ वाक्यपदीयम् १/२५

योग्यता सम्बन्धस्त्विन्द्रियविषयोर्दृष्टान्तेन स्पष्टीचकार । यथा इन्द्रियेषु स्वविषयप्रकाशनयोग्यतानादिकालतः प्राप्यते तथैव शब्दस्यार्थेन सहानादियोग्यतासम्बन्धो भवत्येव । यथोक्तम्-

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।

अनादिरर्थै : शब्दानां सम्बन्धो योग्यता तथा ॥ वाक्यपदीयम् ३/३/२९

अस्य योग्यतासम्बन्धस्य व्याख्याने स्वोपज्ञवृत्त्यां लिलेख - ''इन्द्रियविषयवद्वा प्रकाश्यप्रकाशकभावेन समयोपाधिर्योग्यता शब्दार्थयोः सम्बन्धः'' वाक्यपदीयम् (१/२५) । सम्बन्धोऽयं प्राचीनमुनित्रयेणापि स्वीकृतः । महाभाष्यकाराः पदे-पदे पेठुः- ''अभिधानं पुनः स्वाभाविकम्'' (१/२/६४, २/२/३५) । अस्य स्वाभाविकसम्बन्धविषये ते समालोचनपूर्वकं प्रतिपादयामासुः -''स्वाभाविकं शब्दैरर्थाभिधानमाहोस्विद् वाचनिकम् ? स्वाभाविकमर्था-नादेशात् । न ह्यर्था आदिश्यन्ते, कथं पुनरर्थानादिशन्नेवं ब्रूयात् - 'अर्था नादिश्यन्ते' इति, यदाह भगवान् - 'चार्थे द्वन्द्वः, अपत्ये रक्ते निवृत्त इति ? नैतान्यर्थादेशनानि । स्वभावत एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते'' (२/१/१) । पुनस्तत्रैवाभिहितं यदि शब्दार्थयोर्निर्देशः क्रियते तर्हि अनवस्थादोषोऽप्युपपद्यते । अत एव स्वभाविक एव सम्बन्धः स्वीकर्त्तव्यः । तत्र यथोक्तम् - ''किं पुनः कारणमर्था नादिश्यन्ते ? तच्च लघ्वर्थम् । लघ्वर्थं ह्यर्था नादिश्यन्ते । अवश्यं ह्यर्थेनानेनादिशता केनचिच्छब्देनार्थनिर्देशः कर्त्तव्यः स्यात् । तस्य च तावत् केन कृतो येनाऽसौ क्रियते ? अथ तस्य केन कृतः, तस्य केन कृत इत्यनवस्था स्यात्, असंभवः खल्वप्यर्थादेशनस्य । को हि नाम समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्'' (२/१/१) । अत एव वाक्यपदीयकारेणाऽपि प्राचीनव्याडिग्रन्थस्य वचनमेकं स्वोपज्ञविवृत्त्यामुद्धृतं हि -

सम्बन्धस्य न कर्त्तास्ति शब्दानां लोकवेदयोः ।

शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कृतः कथम् ।। वाक्यपदीयम्१/२६.

एवञ्चायमनादिः सम्बन्ध ईश्वरेण कृत इत्यपि वैयाकरणा स्वीकुर्वन्त्येव । यथा नागेशो लघुमञ्जूषायां प्रणिजगाद –''सम्बन्धशब्दे योग्यतां प्रति बोधजनकतावच्छेदकधर्मरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः सम्बन्धः, स एव योग्यता, सा स्वाभाविक्येवानादिवृद्धव्यवहारपरम्परापरपयार्यास्मदादिसमयगृहीतोक्तेश्वरसमयान्निश्चीयते'' (पृ. ३५) ।

## (अ) तार्किकदृष्ट्या स्वाभाविकसम्बन्धस्य प्रत्याख्यानम्

स्वाभाविकशब्दार्थसम्बन्धवादस्य सम्यग् विवेचनं षष्ठाध्याये न्यायमीमांसामतानुसरणेन भविष्यति । वस्तुतस्तु न शब्दार्थयोस्सम्बन्धः स्वाभाविकः, अन्यथाऽऽधुनिकभाषावैविध्यं न स्यात् । एकस्या भाषायाः कालक्रमेण विकासोऽपि न संभवेत् । वृद्धव्यहाराद्युपायाद् अभ्यासाच्च शैशवे भाषाप्रयोगपाटवं शनैः शनैर्लभ्यते लोकैः । स्पष्टमेतद् बालैर्न शब्दार्थसम्बन्धः क्रियते, अपि च वृद्धव्यवहारेण बालस्य शब्दव्यवहारो नियम्यते । तथा च वृद्धव्यवहाराद्बालो न केवलं पदपदार्थयोः सम्बन्धं जानाति, अपि तु वाक्यप्रयोगशैलीं शनैः शनैरवबुध्यापूर्ववाक्यरचनां विधातुं बोद्धुञ्च शक्नोति । परञ्चैतावता शब्दार्थयोः सम्बन्धः स्वाभाविक इति न सिध्यति । अन्यथा शास्त्रकृत्संज्ञाकरणं चैत्रमैत्रादिसंज्ञाकरणमपि न संभवेत् ।

## (इ) भर्तृहरिप्रतिपादितकार्यकारणसम्बन्धविचारः

अधुना द्वितीयकार्यकारणसम्बन्धो विचार्यते । सम्बन्धविषयकविचारं प्रस्तुवता भर्तृहरिणा तत्त्वत्रयस्योल्लेखः कृतः–

ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपञ्च प्रतीयते ।

शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः ।। वाक्यपदीयम् ३/३/१.

अत्र प्रयोक्तुर्ज्ञानं प्रथमतत्त्वं, बाह्योऽर्थो द्वितीयं, शब्दस्वरूपं तृतीयम् । बाह्यार्थशब्दस्वरूपयोः सम्बन्धोऽनादिर्योग्यता इति पूर्वमेवोक्तम् । अतः स एव वाच्यवाचकसम्बन्ध इत्युच्यते । प्रयोक्तुरभिप्रायेण सह शब्दस्य सम्बन्धः

कार्यकारणभावरूप इति गम्यते । अतो हेलाराजस्तत्र – "अर्थस्वरूपाभ्यां शब्दस्य वाच्यवाचकभावः । प्रयोक्त्रभिप्रायेण तु कार्यकारणभावः" इति (३/३/१) विवेचयाञ्चकार । किञ्चायं कार्यकारणसिद्धान्तो भर्तृहरिणान्यथारूपेण व्याख्यातः । तेनैवाद्वैतसिद्धान्तो बौद्धार्थवादो व्याकरणतन्त्रे स्थानं प्राप । तस्यौपचारिकसत्ताख्यवादस्य मीमांसा प्रस्तूयते । शब्दार्थयोर्मध्ये कार्यकारणभावः प्रतिभाति, यथा हि-

शब्दकारणमर्थस्य स हि तेनोपजन्यते ।

तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ॥ वाक्यपदीयम् ३/३/३२.

श्रोतृबुद्ध्युपारूढस्यार्थस्य (बौद्धस्येत्यर्थः) शब्दः कारणम्, जनकत्वात् । तथा चान्यस्माद् वक्तृबुद्धिनिवेशनोऽर्थात् कारणभूताच्छब्दः श्रुतिविषयमनुप्राप्तः प्रतीयते, इत्यर्थोऽपि शब्दकारणकः । एवं चोभयथा कार्यकारणभावसत्त्वात् परस्परभेदेनाध्यासलक्षणं प्रतिपाद्यते । यथा हि-"बुद्धौ शब्दार्थयोः पूर्वभेदेनावस्थानम्, न हि विवक्षितोऽर्थः शब्दसम्बन्धशून्यः सङ्कल्परूपस्य तस्य प्रतिभानादनादिशब्दभावनमनु- विद्यते हि तिरश्चामपि च ज्ञानम् । अत एव स्थानकरणव्यापारादिभिर्व्यक्तोऽर्थरूपः शब्द इति शब्दश्रोतृभिरवधारितस्तथैव स्वरूपाच्छुरणयार्थमपि गमयति । प्रतिपाद्यप्रतिपादकयोर्हि परस्पराभिप्रायसङ्क्रान्तिव्यवहार इति अन्तःस्थितमर्थं मूलावस्थायामप्यपरित्यक्तं वक्तृबुद्धिसमाविष्टं श्रोतृनर्पयति । शब्दश्रोतापि च तथैव प्रतिपद्यते समाविष्टभावनः । तेन च उद्बोधितभावनस्तेन च प्रवर्तनः" इति व्याख्यानमकार्षीत् रामाज्ञापाण्डेयः (व्याकरणप्रदर्शनप्रतिमायां पृ. ११०) । भर्तृहरिः पुनः बुद्ध्युपारूढे शब्दार्थे कथम् ओदनं भुङ्क्ते ? इति व्यवहार इत्याशङ्क्याह-

भोजनाद्यभिमन्यते बुद्ध्यर्थे यदसंभवि ।

बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥ वाक्यपदीयम् ३/३/३३.

बुद्ध्यर्थे (बुद्धये शब्दः, अर्थः) भोजनम्, भोक्ता तत्सम्बन्धश्चेत्येतत् सर्वं पदसम्भावित्वेनाभिमतम्, तदपि सम्भवत्येव बुद्ध्यर्थादेव ओदनाद् बुद्ध्यर्थे जाते सति तदपि भोजनादिर्दृश्यते अभ्युपगमवादश्चायम् । पदमात्राद् अभिप्रेतार्थस्यावगमो न, अतो यो बौद्धार्थ उपपन्नो भवति स क्रियाकारकसम्बन्धान्वित एव भवतीति स्वीकरणे बौद्धनये न कोऽपि दोष । अत एव हेलाराजेन तत्रोक्तम् "अभ्युपगमवादश्चायम् । बाह्यनयेऽपि शब्दार्थस्य

बुद्धिविपरिवर्तिनः प्रतीतेः क्रियाकारकभावे दृश्यविकल्पयोरभेदाध्यवसायाद् व्यवहारसिद्धिर्भवत्येव"(३/३/३४) । बाह्यार्थे सति दर्शनम् । दर्शनादर्थनिर्भासः, तस्मिन् सति वक्तुमीहा, ततः प्रतिभादेः शब्दोच्चारणमिति परम्परया बाह्य एव वाच्ये प्रवृत्तिः । किञ्चास्मिन् भर्तृहरिमते बाह्यार्थं विनाऽपि सर्वं समर्थयितुं शक्यत इति ज्ञेयम् ।

बौद्धपदार्थस्वीकारेण बाह्यत्वेनार्थस्याभावेऽप्यभिधेयत्वेन शब्दार्थस्य नियतत्वाद् व्यवहर्त्तुं शक्यते । यतो हि प्रोक्तम्-

अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम् ।

अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते ॥ वाक्यपदीयम् ३/३/३४.

ततश्चानित्यत्वं स्वशक्तिर्नित्याद् ब्रह्मणो न भिद्यते । अर्थाद् अनित्यैर्घटाद्युपाधिभिर्विशिष्टं सर्वावस्थं ब्रह्मद्रव्यमेव नित्यं प्रतिपाद्यत इति नित्यः शब्दार्थसम्बन्धः । निरर्थकानां शाबरादिविधानानां विषादिशमने सामर्थ्यं दृष्टम्, तेषु तेषु शास्त्रेषु बीजादिजपेनादृष्टोत्पत्तिश्च श्रूयत इति कल्पते कार्यकारणसम्बन्धः ।

## (उ) कार्यकारणभावसम्बन्धस्य समीक्षा

भर्तृहरिणात्र शब्दार्थयोः कार्यकारणभावरूपः सम्बन्धः प्रतिपादितः, वस्तुतः स न युक्त्या सिध्यति । न च ज्ञानविषययोः सम्बन्धोऽभेदो भवितुमर्हति, अन्यथा घटस्य ज्ञानमित्यत्र षष्ठीप्रयोगानुपपत्तिः । ज्ञानं नामात्मनिष्ठत्रिक्षणस्थायी विशेषगुणः । न च निर्विषयं ज्ञानं संभवति । ज्ञानस्य विषय इति षष्ठीप्रयोगादपि ज्ञानविषययोर्भेदः सम्बन्धः सिध्यति । वक्तृवाक्यश्रवणाच्छ्रोतरि जायते शाब्दं ज्ञानम्, न खलु तस्य ज्ञानस्य विषयः । वक्त्रुच्चरितशब्दश्रवणाच्छ्रोतरि ज्ञानं (शाब्दबोधः) जायते । ज्ञाने कार्यता, श्रावणप्रत्यक्षे तु कारणतावश्यं स्वीकर्त्तव्या । अत एवोक्तं विश्वनाथन्यायपञ्चाननेन -

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।

शाब्दबोधः फलं तत्र शक्तिर्धीः सहकारिणी ॥

(न्यायमुक्तावलिः शब्दखण्डः१)

अत्र पदज्ञाने तु कारणता, व्यापारता पदार्थोपस्थितेः, शाब्दबोधे तु कार्यतावश्यं स्वीकर्त्तव्या, इत्यलं पल्लवितेन। बौद्धार्थवादस्य मूलभूतस्य शब्दार्थकार्यकारणसम्बन्धवादस्य विवेचनं पुनरग्रे विस्तरतो भविष्यति।

## (ऋ) भर्तृहरिहेलाराजयोः सामयिकसम्बन्धस्य खण्डनन्तत्समीक्षा च

भर्तृहरिमतेन शब्दार्थसम्बन्धो न सामयिकः। शब्दार्थप्रतीतेर्दर्शनात् सम्बन्धोऽवश्यं कल्पनीयः। तथा च शब्दस्यार्थेन सह सम्बन्धं विना तस्यार्थस्य प्रत्ययो न भविष्यति। असम्बद्धस्यार्थस्य प्रत्ययस्वीकारे सर्वोऽप्यर्थः प्रतीतिविषयो भवेत्। स च सम्बन्धः सामयिको न युज्यते। अत उक्तम् -

नित्येऽनित्येऽपि वाच्येऽर्थे पुरुषेण कथञ्चन।

सम्बन्धोऽकृतसम्बन्धः शब्दैः कर्त्तुं न शक्यते॥ वाक्यपदीयम् ३/३/३८,

नित्ये बौद्धेऽनित्ये वा बाह्यार्थे घटादौ, अथवा नित्ये कालदिगादावकृतसम्बन्धः शब्दैः कर्त्तुं न शक्यते। किन्त्वनादिसिद्धोऽयमर्थेन सह सम्बन्धः। एवमेव वैयाकरणपरम्परानुसारं हेलाराजस्तार्किकसम्मते सङ्केतसम्बन्धेऽनवस्थादिदोषं प्रददर्श। यथोक्तम् - "तथा च निरूपकाणामपि शब्दानां सङ्केते सैव वार्तेति, तत्रापि शब्दान्तरैर्निरूपणेऽनवस्था, अकृतसमयैर्निरूपणानुपपत्तेरिति सुदूरमपि गत्वा कस्यचिच्छब्दस्य स्वाभाविकी योग्यतैषणीया। तथा चाविशेषात् सर्वेषामपि तत्प्रसङ्गः, इति सिद्धः स्वाभाविकः शब्दार्थयोः सम्बन्धः समयवशादभिव्यज्यमानस्वरूपः" (३/३/३८)।

## (लृ) तार्किकस्य समाधानम्

अत्र तार्किको हेलाराजस्य दोषदर्शनमालोचयति। न च शब्दार्थसम्बन्धस्य सामयिकत्वाङ्गीकारेणानवस्थादोषप्रसङ्गः। न ब्रूमोऽकृतसम्बन्धैः शब्दैरपूर्वशब्दार्थसम्बन्धः क्रियते। महर्षिपाणिनिः वृद्धिसंज्ञां ज्ञापयित्वा तदनन्तरं वृद्धसंज्ञां ज्ञापयति। तत्र "वृद्धिरादैच्" (१/१/१) इति संज्ञासूत्रे प्रत्याहारमुखेन 'ऐ, औ' इति वर्णद्वयस्य 'आत्' इति पदेन दीर्घाकारमात्रस्य च ग्रहणमभीष्टं शब्दतत्त्वविदां नयेन। प्रत्याहारस्य ज्ञानमन्यैः सूत्रैः संभवति, तथा चात्र वर्णास्तु शृङ्गग्राहिकतान्यायेनोपदिष्टाः। अत्र संज्ञाकरणे शास्त्रप्रक्रियायां कथमनवस्थादोष इति न ज्ञायते। तथैव लौकिकप्रक्रियामपि संज्ञाकरणे

नानवस्थादोषः प्रसज्यते । न च शृङ्गं ग्राहयित्वा गौरियं इतिवच्छब्दार्थसम्बन्धज्ञापनाद् वह्निधूमयोरिव तयोः शब्दार्थयोः सम्बन्धः स्वाभाविकः सिध्यति । न चाहमस्मि, इत्यकारकज्ञानस्य प्रामाण्यं संवादिव्यवहारस्य स्वतःसिद्धत्वान्नापेक्षत इत्यस्मात् सर्वं ज्ञानं तथैव स्वतःसिद्धं सिध्यति । न च शिष्यस्याध्यापककृतचपेटादानान्तरं रोदनाच्छारीरिकपीडारूपोऽर्थोऽभिहितो भवति, स त्वनुमानेन ज्ञायते । तथा च भारोत्थापनकाले श्रमिकः स्वप्रयत्नकेन्द्रीकरणार्थं कञ्चिच्- छब्दं करोति, इत्यस्मान्नार्थबोधः । प्रयत्नकेन्द्रीकरणं तु शब्दविशेषरूपहेतोरनुमीयते । 'तुष्यतु दुर्जनोन्यायेन' स्वीकृतेऽपि कतिपयशब्दानां तेषामर्थैः सह स्वाभाविके सम्बन्धे न सर्वत्र तादृशस्वाभाविकसम्बन्धाङ्गीकारप्रसङ्गः ।

### ३. कार्यकारणसम्बन्धेनोपचारसत्ताकल्पनम्

भर्तृहरिः शब्दार्थयोः कार्यकारणभावसम्बन्धं प्रतिपादयन् भाष्योक्तं 'सम्प्रतिसत्तायां यथा स्यात्, भूतभविष्यत्सत्तायां मा भूत्' (५/२/९४) इत्यादाय व्याख्यानव्याजेन प्रकृतसम्बन्धस्य नित्यत्वं व्यनक्ति । यदुक्तम् -

व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ।
सर्वावस्थासु सर्वोषामात्मरूपस्य दर्शिका ॥ वाक्यपदीयम् ३/३/३९.

पदार्थानां व्यपदेशे बाह्यसत्तातो विलक्षणौपचारिकी सत्ताऽन्या । सौपचारिकी सत्ता सर्वास्थासु सर्वेषामात्मस्वरूपस्य दर्शिका । एवं चानयैवौपचारिक्या सत्तया सर्वोऽपि व्यवहारः । सत्तेयमवश्यं स्वीकार्या । अतो निदर्शनेनोपपादयाञ्चकार-

स्फटिकादि यथा द्रव्यं, भिन्नरूपैरुपाश्रयैः ।
स्वशक्तियोगात् सम्बन्धस्ताद्रूप्यमुपगच्छति ॥ वाक्यपदीयम् ३/३/४०;
तद्वच्छब्दोऽपि सत्तायामस्यां पूर्वं व्यवस्थितः ।
धर्मैरुपैति सम्बन्धमविरोधिविरोधिभिः ॥ वाक्यपदीयम् ३/३/४१.

इह बाह्यस्य वस्तुनो नियतरूपत्वाद् भावाभावसाधारण्यानुपत्तेर्घट इत्युक्ते 'अस्ति नास्ति' इति शब्दान्तरोपसंनिधीयमानरूपसंसर्गविरोधस्यापि उपचारसत्तासमाविष्टः शब्दार्थो मन्तव्यः । स्फटिकादिस्वच्छं श्वेतं द्रव्यं (स्वरूपतः) यथा भिन्नरूपैः पीतैर्नीलैर्वोपाश्रयैः सन्निकृष्टैः स्वशक्तियोगात्

(स्वस्मिन् या पररूपग्रहणशक्तिस्तद्योगात्) ताद्रूप्यं नीलपीतादिभावमुपगच्छति, तथैव शब्दोऽपि पूर्वमुपचारसत्तायाम् अस्यां व्यवस्थित अविरोधिभिर्विरोधिभिश्च धर्मैः सम्बन्धमुपैति, इत्याशयः ।

## (अ) उपचारसत्तायाः प्रत्याख्यानम्

इह भर्तृहरिणा सत्तायाः द्वैविध्यं मुख्योपाचारसत्ताभेदान्निरुक्तम् । तत्र केयमुपचारसत्ता भावाभावसाधारणा कालोपाधिभिरस्पृष्टा पदार्थानां स्वरूपदर्शिका ? सर्वलोकानुभवसिद्धा सत्ता त्वतीतानागतवर्तमानादिभेदेन क्रिययाभिव्यज्यते । आसीद् अस्ति भविष्यति, इत्यादि तिङन्तपदैरेका हि सत्ता कालोपाधिविशिष्टा ज्ञाने भासते । न च तस्या लोकानुभवसिद्धायाः सत्तायाः स्वरूपदर्शिकास्ति, अन्या भवत्परिकल्पितोपचारसत्ता । न हि सूर्यो द्विविध उपलभ्यते बाह्यसत्तावान्, उपचारसत्तावांश्च । य एव सूर्य उदीयमानोऽस्तमयमानो वा चाक्षुषप्रत्यक्षज्ञानविषयः सन्नस्माभिर्वन्द्यते, स एव सूर्यो ब्राह्ममुहूर्त्ते 'सूर्य उदेष्यति' इति वाक्यजन्यशाब्दबोधे ज्ञानविषयः सन् भासते, न तु शाब्दबोधज्ञानविषये सूर्ये उपचारसत्ता, प्रत्यक्षविषये ज्ञाने मुख्यसत्ता, अन्यथा ज्ञानद्वयविषययोरभेदानुपपत्तिः । यो मे पितामहो बाल्यकाले प्रत्यक्षविषय आसीत्, स पुनरिदानीं स्मृतिविषयतां याति । अत्रातीतकालिकप्रत्यक्षविषयपितामह इदानीं दिवङ्गतस्मृतिविषयपितामहाद् न भिद्यते । अतो न वक्तुं शक्नुमः- एको बाह्यसत्तावान्, अन्यस्तूपचारसत्तावान् । न चात्रेदृश्यभेदप्रतीतिर्नियमेनाप्रमा भवति । न च ज्ञानोत्पत्ति-कालभेदाज्ज्ञातृभेदाद् वा ज्ञानविषये भेदः प्रविशति । यद्येको विषयो बाह्यसत्तावान्, अपरश्चोपचारसत्तावान्, तर्हि धर्मभेदादवश्यं धर्मिभेदो भविष्यति । अन्यथा भेदाभेदविचार एव विलुप्यते । यदि च ' शाब्दबोधे यो विषयो भासते स उपचारसत्तावान्, प्रत्यक्षे यो विषयो भासते स मुख्यसत्तावान्' इति स्यात्, तर्हि शाब्दबोधप्रत्यक्षविषययोः कदाचिदभेदो न संभवेत् । संभवति चात्राभेदप्रतीतिः । तस्माद् भवत्परिकल्पितोपचारसत्ता तु तार्किकप्रति- पादितविषयतामात्रम् । विषयता तु विषये वर्तते, सा च विशेष्यता-संसर्गता-प्रकारता-भेदेन त्रिविधा । यथा 'अयं घटः' इति प्रत्यक्षे घटत्वे प्रकारता, इदमर्थे विशेष्यता, समवायादौ सम्बन्धे च संसर्गता । यथोक्तं न्यायमञ्जर्याम् -''विषयता चात्र विषयः, इत्याकारकप्रतीतिसाक्षिकः

स्वरूपसम्बन्धविशेषः'' (पृ. ४) । न हि सर्वो विषयो न्यायदार्शनिकाङ्गीकृतसत्ताजातिमान् भवति । लोकानुभवसिद्धा या सत्ता सा तु कालोपाधिभिर्विशिष्टा ज्ञानविषयेषु भासते ।

ज्ञानस्य प्रमात्वमप्रमात्वञ्च तद्वतितत्प्रकारकलक्षणद्वारेण तदभाववतितत्प्रकारक इति लक्षणद्वारेण च संभवतः । न हि ज्ञानमप्रमा, इत्यस्माद्धेतोः ज्ञानस्य विशेष्यप्रकारकसंसर्गरूपविषयानामप्रसिद्धा मुख्यसत्ताभाववत्त्वं वानुमातुं शक्नुमः । अन्यथा दण्डाभाववति चैत्रे भ्रमज्ञानजन्यस्य 'दण्डी चैत्रः' इत्यभिलापवाक्यस्य प्रयोगस्थले श्रोतरि यः शाब्दबोधो जायते, तेन दण्डे दण्डपुरुषयोः संयोगसम्बन्धविशेषे तु भवत्परिकल्पितोपचारसत्तामात्रं स्यात्, अस्मन्मते त्वप्रमाविषयाणामपि विषयताक्षुण्णा, भ्रमत्वन्तु तद्वतितत्प्रकारकत्वाभावात् । विषयताऽपि सर्वेषामात्मरूपस्य दर्शिका भवितुमर्हति । न च विषयताया विना ज्ञानस्य प्रमात्वाप्रमात्वादिधर्माणां सम्यङ्निर्वचनं कर्त्तुं शक्नुमः । अतस्तामेव स्वीकरोतु भवान्, उत्सृज्योपचारसत्तां गङ्गाप्रवाहे । यदि भ्रमरूपशाब्दबोधस्थले विषयतामवलम्ब्य प्रक्रियानिर्वाहः सिद्धस्तर्हि प्रमारूपशाब्दबो- धस्थलेऽवश्यमुपचारसत्ताया निष्प्रयोजनत्वं स्पष्टम् ।

## ४. उपचारसत्ता (बौद्धसत्ता)-साधिकायुक्तयस्तासां सम्यक् परीक्षणञ्च.

बौद्धार्थसाधने नञर्थोपपत्तिः जायतेऽस्तिइति क्रियापदयोरूपपत्तिश्च प्रमाणमस्ति ।

### (अ) बौद्धार्थेनैव नञर्थोपपत्तिस्तत्समीक्षा च

वाक्यपदीयकारेण नञर्थोपपत्तिसिद्ध्यर्थं बौद्धार्थमावश्यकमिति प्रतिपादितम्-

एवं च प्रतिषेध्येषु प्रतिषेधप्रक्लृप्तये ।

आश्रितेषूपचारेण प्रतिषेधः प्रवर्त्तते ॥ वाक्यपदीयम् ३/३/४२,

यदि चौपचारिकी सत्ता नाङ्गीक्रियते तदा 'अब्राह्मणोऽयम्' इति प्रयोगो न स्यात् । यदा तूपचारसत्तासमाविष्टः शब्दार्थस्तदा सामान्येन

भावाभावसाधारणतया ब्राह्मणशब्देन क्षत्रियादिषु सादृश्येनारोपितो ब्राह्मणार्थः समुल्लिखित इति प्रतिषेधविषये दर्शिते नेति निषेधः प्रवर्तते ।

अत्र न ब्राह्मण इत्यादौ मुख्यब्राह्मणत्वनिषेधाश्रयता विषयेषु क्षत्रियादिषु प्रतिषेधस्य प्रसिद्धये ब्राह्मणगुणदर्शनेनाश्रितेषूपचारेण प्रतिषेधः प्रवर्तते । प्रतिषेधः न ब्राह्मण इति क्षत्रियादिष्वध्यारोपितस्य ब्राह्मणत्वस्य निषेधः । बुद्ध्याकारस्य नानाविधधर्मसमन्वययोग्यत्वे ब्राह्मणादिषु नञर्थोपपत्तिरिति प्रतिपादयन् हेलाराजस्तत्र व्याचख्यौ -''सत्ताविरोधान्निषेधायोगान्न ब्राह्मणोऽत्र सन्, असत्त्वे तु कथं तत्र शब्दप्रवृतिर्बाह्यशब्दार्थवादिनाम् ? तथा च पुनरपि निषेधोऽनुपपन्नः'' (३/३/४२) । बाह्यसत्ताया अभावेन सह विरोधः, यद् बाह्यरूपेण सत् तस्मिन्नेव काले तद् असद् भवितुं नार्हति । इत्थं प्रकारेण यद् असद् वर्तते, तत्तस्मिन् समये बाह्यरूपेण सद्भवितुमपि नार्हति । अस्यामवस्थायां ब्राह्मणपदेन यदि बाह्यसत्ताविष्टोऽभिप्रेतः तर्हि 'अब्राह्मणः' इति प्रयोगो न संभवति । यदि बाह्या सत्ता, तदा कथं तस्या अभावो भविष्यतीति प्रतिपादयता नञर्थोपपत्तिसिद्धये हेलाराजेन भर्तृहरिकारिकासमर्थने बौद्धनैयायिकधर्मकीर्त्तिविरचितप्रमाणवार्त्तिकस्य कारिकोल्लिखिता । यदुक्तम्-

सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयङ्गतः ।। प्रमाणवार्त्तिकम् ४-२२६,

अत्रोपचारसत्ता भावाभावसाधारणा भवति, अस्याश्रयेण क्षत्रियादिषु ब्राह्मणत्वार्थस्याध्यारोपो भवति । उपचारसत्तायाः भावाभावसाधारणत्वान्न ह्यत्र विरोधः । बौद्धार्थे स्वीकृते, बाह्यक्षत्रियादिषु बौद्धब्राह्मणार्थस्य प्रतिषेधो नञा द्योत्यते, इत्थं नञर्थोपपत्तिः । नञा बाह्यार्थस्य निवृत्तिः । यदि ब्राह्मणपदेन बौद्धार्थस्योपस्थितिः, तर्हि नञ्समासेन तद्बौद्धार्थस्य निषेध एव संभवति । किन्तु लोकप्रयोगो बाह्यार्थमुद्दिश्य भवति । तत्रैव निषेधः फलति । यथोक्तं हेलाराजेन -''योऽयं ब्राह्मणार्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रियेऽध्यवसित इति स्वाभाविकब्राह्मणार्थनिवृत्तिरत्र नञा द्योत्यते'' । भाष्येऽपि- ''यदि पुनरयं निवृत्तपदार्थको ब्राह्मणशब्दः किमर्थं प्रयुज्यते, एवं तथा विज्ञायेत, नेति ह्युक्ते सन्देहः स्यात् कस्य पदार्थो निवर्तते'' (२/२/६) ।

''अत्र सर्वथा निवृत्तपदार्थकत्वे प्रयोग एव न स्यादिति बाह्यार्थापेक्षयैव निवृत्तपदार्थकत्वम् । उपचारसत्तापेक्षया तु प्रयोग इति स्फुटमुक्तं भवति'' इति हेलाराजीय व्याख्यानम् (३/३/४२) ।

समीक्षा–वस्तुतो प्रसज्यप्रतिषेधे नञ् क्रियया सहान्वेति । तेन नञा क्रियाभाव एव गम्यते न तु पदार्थाभावः । अत एव वैयाकरणधुरन्धरो भट्टोजिदीक्षितः शब्दकौस्तुभ आह"- सिद्धान्ते प्रसज्यप्रतिषेधे सर्वत्र क्रिययैव सह नञोऽन्वयो न तु नामार्थेन । तदुक्तं प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञिति । अत एव पुरुषवचनयोरसङ्करः । अन्यथा हि घटो नास्ति, त्वं नासि, अहं नास्मि, इत्यत्र पुरुषव्यवस्था न स्यात् । घटाभावस्त्वदभावो मदभावश्चास्ति इतिवत्सर्वत्र प्रथमपुरुषापत्तेः । भूतले घटो नास्तीत्यादावधिकरणत्वं क्रियान्वय्येव न तु नञर्थान्वयि । तथा च सकलकारकविशिष्टक्रियायां नञर्थान्वयः" इति (१/१/४, पृ. १२३) । एवञ्च "आरोपितत्वं नञर्थः । तथा च मायामनुष्यमायामृगव्याजनिशाकरकपट-ब्राह्मणादिशब्देभ्यः इवारोपितो मिथ्याभूतोऽयं ब्राह्मण इत्येवं शाब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं, न तु शाब्दोऽयमर्थः" (शब्दकौस्तुभे, १/१/६ पृ. २०२) इत्यपि व्याजहार ।

यदि भर्तृहरिविवेचितो नञर्थः स्वीक्रियते तर्हि वायौ रूपं नास्ति' इत्यत्र रूपाश्रिताऽऽरोपिता सत्ता वायौ, इति बोधः । "पीतः शङ्खो नास्ति, इत्यत्र चारोपिता पीतशङ्खसत्तेति गम्यते, विशिष्टास्तावन्तः पदार्थाः प्रसिद्धा, अत एव तेषामारोपोऽपि सम्भवत्येव । अत एव 'शशविषाणजन्यं कार्मुकं नास्ति' इत्यादौ शशविषाणजन्यकार्मुकनिरूपिताऽऽरोपिता सत्तेत्यादिबोधः । एतन्मते चार्थिकं घटो नास्तीत्यभावज्ञानमादाय नार्थविशेष्यको बोध इति व्यवहारः, प्रतियोगिज्ञानप्रतिबन्धादिकञ्च सङ्गमनीयम्" इति बृहद्वैयाकरणभूषणे नञर्थनिर्णये (पृ.२२५) पूर्वपक्षे निरूपितम् । अस्य समालोचने युक्तिं प्रस्तुवता कौण्डभट्टेन स्फोरितम् -"अभावस्य न वाच्यत्वे घटो नास्तीति शब्दाद् अभावबुद्धिर्न स्यात् । तथा च घटवत्ताज्ञानप्रतिबन्धादिकं च न स्यात्, न चाग्रे तज्ज्ञानं जायते इति वाच्यम्, नियमतस्तज्ज्ञापकाभावात् । आरोपितत्वज्ञानमेव तथा इति चेद् ? न, प्रत्यक्षे व्यभिचारेण तज्ज्ञानस्य तत्राजनकत्वात् । न चारोपितत्वज्ञानमप्यारोप एव, प्रतियोग्यधिकरणसंसर्गज्ञानस्यैव तत्त्वात् । तथा च स एव हेतुः प्रत्यक्षान्तरेष्विति वाच्यम्, आरोपस्याभावबुद्धावहेतुत्वात्" इति (बृहद्वैयाकरणभूषणे पृ. २२५-२२६) । एवमपि "न चेदमिदं न, चेदमिह, इत्यनुभवसिद्धं तदिति वाच्यम्, द्वितीयेदमः सर्वत्राभावेनैव सहान्वयात् । यत्तु प्रतियोग्यारोपस्याभावप्रमायां गुणत्वेन हेतुत्वात् सर्वत्रैव स हेतुरिति, तन्न,

प्रमाया गुणजन्यत्वे मानाभावात् । भावे वाऽभावसंनिकर्षादेरेव तथात्वात्, प्रमात्वस्य कार्यताऽनवच्छेदकत्वाच्च'' इत्यपि नञर्थस्य युक्तिसम्मतं विवेचनं बृहद्भूषणे (पृ. २२९) विशदीकृतमुपलभ्यते ।

एवमपि 'न' इत्येव प्रत्यक्षापत्तिः, इति शङ्कामवतार्य समाधानं विदधताचार्येण प्रकटितम् -''वस्तुतो निष्प्रकारकमभावप्रत्यक्षं यदि नानुभवसिद्धम्, अस्तु तर्हि तत्र सप्रकारज्ञानत्वेनैव कारणता । इत्थञ्च सर्वत्र विशिष्टबुद्धिसामग्री सुलभैवेति न 'न' इति प्रत्यक्षम् । संशयोत्तराभावप्रत्यक्षे च धर्मितावच्छेदकावच्छिन्नाभावविषयकत्वम् । यदि चोपस्थितविशेषणस्या-संसर्गग्रहः, तदापि धर्मितावच्छेदकानियन्त्रिततद्विशिष्टबोधे न बाधकम् । एवञ्च नोक्तो गुरुः कार्यकारणभाव इत्यस्मद्गुरवः । तस्मान्नारोपः कारणमस्तु वा, तथा न शब्दे, केवलं न न, इत्यत्राभावबोधस्य भाष्यकारैरुक्तत्वान्निषेधपदादिना तद्बोधाच्च । अस्तु वा शाब्दे स हेतुस्तथापि न तद्बोधोऽनुभविकानाम्, अभावबोधस्यैव सर्वसिद्धत्वात्'' इति (पृ. २२७) तर्कसम्मतं विवेचनं कुर्वन् सिद्धान्तेऽभाव एव नञर्थ इत्याशयवान् वैयाकरणः स्वमतमाह-

''अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।

विशेषणं विशेष्यो वा न्यायतस्त्ववधार्यताम् ॥ बृहद्भूषणं का.४१ पृ.२२७.

तथा च नञ्सूत्रभाष्ये 'निवृत्तपदार्थकः' इति मुख्यं ब्राह्मण्यं यस्मिन्त्स क्षत्रियादिरर्थः । सादृश्यादिनाध्यारोपितब्राह्मण्यो नञ्द्योतितस्तदवस्थ इत्यर्थः, इति कैयटो व्याचख्यौ, तन्न साधीयः, आरोपितब्राह्मण्यस्य क्षत्रियादेर्नञ्वाच्यत्वात्, अन्यथा सादृश्यादेरपि वाच्यतापत्तेः । तस्माद् निवृत्तं पदार्थो यस्य 'नपुंसके भावे क्तः' (३/३/११४) इति भावे क्तोऽभावार्थकः'' इति कौण्डभट्टः (पृ.२२७) ।

एवमेव कारिकाव्याख्यायां तत्र लिखितम् -''विशेषणमिति प्रतियोगिनीति शेषः । अन्यथा 'अत्वं भवसि, अनहं भवामि' इत्यादौ पुरुषव्यवस्था न स्यात्, त्वदभावः मदभावः, इतिवद् अभावांशे युष्मदस्मदोरन्वयेन तिङ्क्षु युष्मत्सामानाधिकरण्याभावात् । अस्मन्मते —भेदप्रतियोगित्ववदभिन्नाश्रय इत्य-र्थाद् युष्मत्सामानाधिकरण्यम् । अत एव 'अनेकमन्यपदार्थे (२/२/२४) इत्यादावेकवचननियमः, अब्राह्मण इत्यादावुत्तरपदार्थप्राधान्यात्

तत्पुरुषत्वञ्चोपपद्यते । विशेष्यो वेति । अयं भावो घटो नास्ति, इत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति बोधस्यानुभवसिद्धत्वात्तस्य विशेष्यतैव युक्ता । 'अत्वं भवसि' इत्यादौ च युष्मदस्तद्भिन्ने लक्षणा न द्योतकः । तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात् पुरुषव्यवस्था 'त्वदभिन्नाश्रयिका भवनक्रिया' इति शाब्दबोधः । एवम् 'न पचति' इत्यत्र त्वद्भिन्नाश्रयकपाकानुकूलभवनाभाव इति बोधः । असमस्तनञः क्रियान्वयात् । 'अनेकमन्यपदार्थे' इत्यत्रैकवचनं विशेष्यानुरोधात् 'सुबामन्त्रितो' इत्यतोऽनुवर्तमानं सुब्ग्रहणविशेष्यमेकवचनमेव" इति (पृ. २२७-२२८) । अतो नञर्थविचारणे बौद्धार्थवादिमतं सम्यकतया तिरस्कृतं भट्टोजिदीक्षितकौण्डभट्टादिभिः शाब्दिकधुरन्धुरैरिति स्वीकर्त्तव्यम् ।

## (इ) अङ्कुरो जायत इति प्रयोगस्यानुपपत्तिस्तत्समीक्षा तार्किकसम्मतिश्च

अविरोधिधर्मसम्बन्धमुपचारसत्तासमाविष्टस्यैव प्रतिपादयितुं मुख्यसत्तायां तावदसम्भवमाह-

आत्मलाभस्य जन्माख्या सत्ता लभ्या च लभ्यते ।

यदि सञ्जायते कस्मादथासञ्जायते कथम् ॥ वाक्यपदीयम् ३/३/४३.

आत्मलाभो वस्तुस्वरूपप्राप्तिर्जन्म कथ्यते । तत्र च त्रयमुपतिष्ठते लब्धा कर्त्ता, लभ्यं कर्म, लाभश्च क्रिया । तथा च जन्मविरोधः सत आत्मलाभायोगात् । तथा च येन रूपेण सद्, न तेन जन्म, येन च जन्म, न तेनासदिति 'जायतेऽङ्कुरः' इति प्रयोगानुपपत्तिः । जन्मानुरोधादसत्ताभ्युपगमे धात्वर्थे कर्तृत्वानुपपत्तेः प्रत्ययार्थविरोधः । तदनुरोधादसत्त्वाभ्युपगमे जन्मलक्षणधात्वर्थविरोध इत्यर्थः । उपचारसत्तायां स्वीकृतायां तु यद्बुद्धौ स्थितं तद् बाह्यजगति जायते, इत्यनेन जायते प्रयोगोऽत्रोपपन्नो भवति । अत्रैवार्थे सदृशं दृष्टान्तमाह-

ततो हि गन्तुर्गमनं सति गम्ये प्रवर्तते ।

गन्तृवच्चेन्न जन्मार्थो न चेत्तद्वन्न जायते ॥ वाक्यपदीयम् ३/३/४४.

विद्यमानस्यैव गन्तुर्गमनं दृश्यते। ततो व्यतिरिक्तं यद् ग्रामादिरूपं कर्म तद्विषयं गमनं दृश्यते। एवमिहापि प्रादुर्भवितृगन्तृतुल्ये द्रव्ये जन्म नोपपद्यते। अथ जन्मानुरोधस्तदा पदार्थस्य विद्यमानत्वाज्जायते क इति कर्तृत्वं न घटते। गम्यवच्च लब्ध्योऽप्यन्वयव्यतिरिक्तो नास्तीति बाह्यशब्दार्थाभ्युपगमेऽनुपपत्तिः।

तदन्वस्य समाधानमुपचारसत्ताश्रयेणोपपादयामास-

उपचर्य तु कर्तारमभिधानप्रवृत्तये।

पुनश्च कर्मभावेन तां क्रियां च तदाश्रयाम्॥ वाक्यपदीयम् ३/३/४५.

अथोपचारसत्तैवं विधेयास्तत्र लादयः।

जन्मना तु विरोधित्वान्न मुख्या सत्ता न विद्यते॥वाक्यपदीयम्३/३/४६.

अत्र अङ्कुरो जायते' इति प्रयोगोपपत्तिमुपचारसत्तयोपपादयति। यथा भाष्ये ''इग्यणः सम्प्रसारणम्'' (अ. १/१/४५) इति सूत्रे ''अथवा भाविनीयं संज्ञा विज्ञास्यते। तद्यथा कश्चित् कंचित् तन्तुवायमाह अस्य सूत्रस्य शाटकं वय' स पश्यति यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता। स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद् भवति'' इति (महाभाष्यम् १.१.४५)। ''तथैवात्रापि भविष्यदङ्कुरे लक्षणया प्रयोगः समर्थ्यते'' इति पं. रामाज्ञापाण्डेयाः। हेलाराजस्तु-पूर्वावस्थाविष्टाङ्कुर उत्तरावस्थायामात्मानं नयति। ततश्चाश्रितपूर्वावस्थश्च उपचरितोत्तरावस्थश्च संमूर्च्छितात्मा जायत इत्यस्य विषयः। कर्तारम् अङ्कुरमुपचर्य उत्तरावस्थत्वेन लक्षयित्वा पुनस्तमेव कर्मभावेन बुद्ध्वा, 'आत्मानं लभते' इत्येव रूपेण कल्पयित्वा कर्त्राश्रयां च क्रियां तत्र भविष्यन्ती समारोप्य अङ्कुरो जायते' इति प्रयोग उपपादनीय इति। अथानया रीत्योपचारसत्तां परिकल्प्य लादय प्रत्ययाश्च विधेयाः। मुख्यायाः सत्ताया जन्मना विरोधात् सा न बुद्धिविषयीभूता। तथा च वक्ष्यति-

पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।

तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते॥ वाक्यपदीयम् ३/१/३९

पूर्वावस्थामजहत् संस्पृशन् धर्ममुत्तरम्।

सम्मूर्छित इवार्थात्मा जायमानोऽभिधीयते॥ वाक्यपदीयम्३/७/११८

एवमेव साधनसमुद्देशेऽपि भर्तृहरिणोपचारसत्तायाः समर्थनं कृतम्। यदुक्तम्-

भावेष्वेव पदन्यासः प्रज्ञया वाच एव वा ।

नास्तीत्यपदे नास्ति न चासद् विद्यते सतः ॥ वाक्यपदीयम् ३/७/१०७.

अयं भावः -ज्ञानशब्दयोरवश्यमेव कश्चन विषय आलम्बनं भवेत् । यथोक्तम् "ज्ञानं ज्ञेयव्यपाश्रयम्" इति । स च तदेव विषयो बाह्यपदार्थोऽर्थ इत्युच्यते ।तेन बाह्यपदार्थेनैव व्यवहारः । तथा च सदेव विषयः पदविन्याससंस्थानं तयोर्ज्ञानशब्दयोः 'नास्ति' इति पदेनावश्यमेवाभावप्रतियोगी भाव एव ग्राह्यः । स च बौद्धो ज्ञानात्मक एव भवतु, परं भाव एवालम्बनं ज्ञानशब्दयो;, नापि सतोऽभावोऽस्ति । तथा च व्यवहारे सर्वमेव भावाभावजातं समानम् । एवं सति सदाकारावग्रहप्रवृतौ 'अङ्कुरो जायते' इति प्रयोग उपपन्नः । ज्ञानेन बुद्धिसिद्धेनाभावस्य निरूपणं भवति । व्यवहारे पदार्थानां बाह्यासत्ता गृह्यते, किन्तु साभावपदार्थरूपेण न गृह्यते । न ह्यभावस्य दर्शनं भाववद्भवति । बुद्धिशब्दविषयभावाव्यतिरेकेण व्यवहारे वस्तूनां बाह्या सत्ता न काचन विद्यते । उक्तम्-

बुद्धिशब्दौ प्रवर्तेते यथा भूतेषु वस्तुषु ।

तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ॥ वाक्यपदीयम् ३/७/१०८.

अस्याशयस्तु यथागतेषु वस्तुष्वेव बुद्धिशब्दयोः प्रवृत्तिः, नान्यपदार्थस्वरूपमप्रतीयमानमनभिधीयमानञ्चाश्रित्य व्यवहर्तुं शक्यते । तथा चार्थोल्लेखरहिताया बुद्धेरयोगाज्ज्ञानसिद्धेन (बुद्धिसिद्धेन) सत्त्वेन जायमानः कर्ता निरूपितश्चाभिधीयते ।

एवमपि ब्राह्मणो नेति 'अब्राह्मणः' इत्यादिष्वपि नास्तीति प्रत्यये च बहिरसन्नपि पदार्थो नियतदेशकालयोर्निषिध्यमानः, अन्यस्मिन्देशे काले चोपलब्धेन नानाकारेणावभासमानः कर्तृप्रत्ययेनाभिधीयते । तथा कार्योन्मुखतायामभिगतमपि वस्तु तज्जातीयानुभववासनया बुद्धावभिमुखीभवत् समर्थहेतुवशाज्जायत इति जन्मनः कर्तृत्वेनाभिधीयत इति । न बाह्यनये 'अङ्कुरो जायते' अङ्कुरो नास्ति' इत्यनयोरुपपत्तिर्भवत्येव ।

वस्तुतो यत्र क्रिया प्रयुक्ता सा क्रियाऽनुमित्या प्राप्यते, अत एव न हि क्रिया प्रत्यक्षेण गम्यते । अनुमानतो क्रियाज्ञानम्, अतः सा काल्पनिक्यनुमानकल्पत्वात् । यथा भाष्येऽप्यभिहितम्, - "न किञ्चिदर्थजातं निदर्शयत्येवं जातीयिका क्रियेति । क्रियानामेयमत्यन्ताऽपरिदृष्टा, अशक्या

पिण्डीभूता निदर्शयितुं, यथा गर्भो निर्लुठितः । साऽसावनुमानगम्या'' इति (महाभाष्यम् १/३/१) । अतोऽनुमितिसाध्या क्रिया यथोपचारसत्तया व्यवहारसिद्धिं साधयति, तथैव जन्मनाशासम्भव उपचारसत्तायाम् । अत एव कल्पितत्वादेव व्यवहारोपपत्तिः । यदुक्तम्-

आकाशस्य यथाभेदश्छायायाश्चलनं तथा।

जन्मनाशावभेदेऽपि तथा कैश्चित् प्रकल्पितौ ॥ वाक्यपदीयम् ३/७/१०८.

कथं कल्पनया व्यवहार इति प्रतिपादयति । यथा कस्मिंश्चित् स्थले घटेनावृत्ते प्रदेशे आकाशभावो ज्ञानगोचरीभवति । तथैवाकाशीये प्रदेशे मूर्तीनां नास्तित्वमप्यवसेयम् । अन्तराले हि मूर्तीनां सत्तायास्तिरोधाने गगनमेव मूर्तिरहितमवधारयन्तोऽर्वाग्दर्शना नास्तीत्यध्यवस्यन्ति । तथा च द्वयोरपि जन्मनाशयोः कल्पितत्वमुपपादितं भवति । तथा च जन्मनाशौ कल्पितावेवेति । यथा हि-

यथैवाकाशनास्तित्वमसन्मूर्त्तिनिरूपितम् ।

तथैव मूर्त्तिनास्तित्वमसदाकाशनिश्रयम् ॥ वाक्यपदीयम् ३/७/११०

यत्र तु कारणं कार्यभावेन परिणतमिति रीत्या 'अङ्कुरो जायते' इति प्रयोगः समर्थितः । तत्र तु कार्यकारणयोर्वास्तविकमभेदमाश्रित्य प्रयोगः समर्थितः । अधुना तु भाविसंज्ञावदुपचरितभेदमाश्रित्य स प्रयोगः समर्थनीय; । यथा हि 'पचेर्विक्लित्तिः' इति प्रक्रियानुसारं बौद्धार्थ एव व्याकरणमते सिद्ध इति निश्चीयते ।

तत्समीक्षा-मतमिदम् अद्वैतवासनावासितान्तःकरणाय रोचते । न हि व्याकरणशास्त्रं वेदान्तशास्त्रस्यैवानुकूलम् । इदं व्याकरणं वेदानां दर्शनानां च सर्वस्याः शाखाया अङ्गं प्रतिपादितम् । अत्र तु युक्तिसिद्धो लोकसिद्धोऽर्थः सर्वदा स्वीकरणीयः, अत एव बौद्धार्थं साधयताऽपि भर्तृहरिणा बाह्यार्थेन व्यवहारसिद्धिः स्वीकृता । केवलां बाह्यां (मुख्यासत्तां) समाश्रित्य ज्ञानेन मनुष्या अर्थबोधं व्यवहारञ्च कर्त्तुं शक्नुवन्ति । अत एव 'अङ्कुरो जायते' इत्यत्र बाह्यसत्ताभावे कथं कर्तृत्वोपपत्तिरित्यस्य केवलबाह्यसत्ताश्रयेणोपपत्तिः स्वीकृता साधनसमुद्देशप्रकरणे । कारकव्यवहारस्तु विवक्षाधीनो भवति, यथा सम्भवनक्रियां च कुर्वती स्थाली 'पचति' इत्युच्यते तत्र तदा पचिर्वर्तते । एषोऽधिकरणस्य पाकः । एतदधिकरणस्य कर्तृत्वं कथं न भवति । इति

शङ्कायाः समाधाने प्रधानक्रियार्थेषु यथास्वं कारकव्यापारेषु पचादीनामेव निवृत्तिर्वर्णिता । तदेतद्भाष्य उक्तम्-"सामान्यभूता या क्रिया वर्तते तस्या निवर्तकं कारणम्" । एतस्य विषयस्य स्फोरणार्थं भाष्यग्रन्थः(महाभाष्यम् १/४/२३) प्रदर्श्यते । यथा-"अपादानादीनां त्वप्रसिद्धिः । अपादानादीनां तु कर्त्तृत्वस्याप्रसिद्धिः । यथा हि भवता करणादीनां कर्तृत्वं निदर्शितम्, न तथाऽपादानादीनां कर्त्तृत्वं निदर्श्यते । न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं, वचनाश्रया च संज्ञा । न वा एष दोषः किं कारणं स्वतन्त्रपरतन्त्रत्वात् । सर्वत्रैवाऽत्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम् । तयोः पर्यायेण वचनम् । तयोः स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनं भविष्यति, वचनाश्रया च संज्ञा भविष्यति । तद्यथा-बलाहकाद् विद्योतते विद्युत्, बलाहके विद्योतते, बलाहको विद्योतते" इति ।

यदा यदा पृथकग्भावेन बलाहकाज्ज्योतिर्विवक्ष्यते तदा बलाहकोऽवधिस्तदा बलाहकाद्विद्योतते । यदा तु निराधारस्य तेजसोऽवस्थानाभावाद्बलाहकः स्थितिहेतुत्वादाधारभावेन विवक्ष्यते, तदाधिकरणसंज्ञोऽसौ जायते बलाहके विद्योतते, इति । यदा तु सर्वेषां समुदायो बलाहकारव्यस्तेजोऽवयववशाद्विद्योतनसमर्थो विवक्ष्यते तदा कर्तृशक्तिरेवाजृम्भते, 'बलाहको विद्योतते' इति ।

अतः कारकप्रयोगो विवक्षाधीनो भवतीति सिध्यति । पाचकः स्थाल्यां पचति, इत्यत्र स्थाली अधिकरणत्वद्योतिका, तथा 'स्थाली पचति' इत्यत्र कर्तृत्वद्योतिका । किं स्थाली स्वतन्त्रकर्त्ताऽपि भवति ? तर्हि भाष्ये सिद्धान्तः स्पष्टीकृतः । यथा-"प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये स्वतन्त्रा तद्यथा-अमात्यानां राज्ञा सह समवाये पारन्त्र्यम्, व्यवाये स्वातन्त्र्यम्" इति (महाभाष्यम् १/४/२३) । अत्रोक्तभाष्यतथ्यं न केनापि बौद्धार्थवादिना खण्ड्यते । अस्य सिद्धान्तस्याश्रयेण कारकव्यवहारः सिद्धः । अत एव बौद्धार्थवादिना भर्तृहरिणाऽपि बाह्यार्थेस्वीकृतेऽपि, व्यवहारो निर्बाध एव चलतीति स्वीकृतम् । केवलबाह्यार्थवादे मुनित्रयस्य (पाणिनीकात्यायनपतञ्जलीनाम्) सम्मतिरध्यायद्वये पूर्वमेव प्रदर्शिता । अतोऽस्मिन्नये व्यवहारप्रकारं निर्वक्तुमाह—

एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते ।
कर्मत्वं करणत्वं वा कर्त्तृत्वं वोपजायते ॥ वाक्यपदीयम् ३/७/१०२,

यदा च विवक्षाधीनं स्वातन्त्र्यं तदेदमपि सिद्धम् । 'हन्त्यात्मानमात्मना' इत्येकस्यैवात्मनो विवक्षाप्रापितरूपाद्धेतोः कारकत्रययोगो दृश्यते । न ह्येकस्य वस्तुनो युगपद्भिन्नानेकरूपता शक्यावस्थातुम् । अङ्कुरो जायते' इत्यादौ जनिकर्तृत्वं सतोऽसतो वा । अत्र विवक्षानिबन्धने कर्तृत्व उपचारार्थोऽपि न कश्चिदित्युच्यते । तथा हि विवक्षारूपाया बुद्धेः शब्दनिमित्तापायेऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धनाः, तदाश्रयेणात्र क्रियान्तरकर्त्तृकत्वतुल्यं जनिकर्त्तृत्वं सिद्धम् । तथा चेयं न हि वास्तविकव्यवस्था किन्तु शाब्दी एव । अत एवोक्तम्–

उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः ।

अवशिष्टः सतान्येन कर्ता भवति जन्मनः ॥ वाक्यपदीयम् ३/७/१०३

ज्ञानस्य (बुद्ध्यावस्थायाः) समाश्रयेण अङ्कुरो जायते, इति प्रयोगोपपत्तिः । ततः कारणमुखेन प्रतिपाद्यते–

कारणं कार्यभावेन यदा वः व्यवतिष्ठते ।

कार्यशब्दं तदा लब्ध्वा कार्यत्वेनाथ जायते ॥ वाक्यपदीयम् ३/७/१०४.

मतमिदं पक्षान्तरम्, अत एव भर्तृहरिणा वा शब्दः प्रयुज्यते । अत्र कारणात् पृथगेव कार्यमाजायते इति पूर्वपक्ष उक्तम् । परिणामदर्शने त्वभेदपक्षोऽयं कथ्यते । कार्यकारणयोः प्रकृतिविकाररूपतया क्षीरं दधि सम्पद्यते । बीजमङ्कुरो जायत इत्यादीनां कारणस्य कार्यात्मना-वस्थानादुत्पत्तिः । यथा निगदितम्–

यथाहेः कुण्डलीभावो व्यग्राणां वा समग्रता ।

तथैव जन्मरूपत्वं सतामेके प्रचक्षते ॥ वाक्यपदीयम् ३/७/१०५.

तद्यथा सर्पस्य कौटिल्यमनर्थान्तरभूतम् । पृथग्भूतानां चाङ्गुल्यादीनां सङ्घातो मुष्टिरित्यवस्थाविशेषमात्रसारः कार्यकारणभाव इति जनिकर्त्तृत्वमुपपन्नम् । अतो बाह्या एव सत्ता स्वीकर्त्तव्येति । कार्यकारणयोर्भेदवादेऽपि जनिकर्त्तृत्वं वास्तवेन रूपेण प्रतिपादयितुमाह–

विभक्तयोनि यत् कार्यं कारणेभ्यः प्रवर्तते ।

स्वा जातिर्व्यक्तिरूपेण तस्यापि व्यवतिष्ठते ॥ वाक्यपदीयम् ३/७/१०६.

जातिरूपेण सर्वे पदार्थास्तिष्ठन्ति । अत एव जात्यात्मना पूर्वं सत्त्वादव्यक्तिरूपेणासत्त्वेऽपि सञ्जायते इत्यनया रीत्या अङ्कुरो जायत इति

प्रयोगोपपत्तिः । वस्तुतो भर्तृहरिर्महाभाष्योक्तां पदार्थानां बाह्यां सत्तां सम्यग्जानाति । यद्यप्युपनिषद्वासनावासितान्तःकरणेन भर्तृहरिणाद्वैत-मतसाधकानि तत्त्वानि व्याकरणसम्प्रदाये निवेशितानीति भट्टोजिदीक्षितेनापि शब्दकौस्तुभे स्वीकृतम् । यथा-"तदेवं वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवान्, इति वाशिष्ठरामायणोक्ताभाणकन्यायेन शब्दविचाराय प्रवृत्तः सन् प्रसङ्गादद्वैते औपनिषदे ब्रह्मण्यपि व्युत्पद्यतामित्यभिप्रायेण भगवान् भर्तृहरिर्विवर्त्तवादादिकमपि प्रसङ्गाद् व्युदपादयत्, तत्तु तन्त्रान्तरे स्फुटं प्रकृते नातीवोपयुक्तं चेति नेह तन्यन्ते" इति (पृ.१४) । अत एवोपचारसत्तायाः कल्पनं जगन्मिथ्यावादसिद्धान्तानुसारमेव न तु शाब्दिकसिद्धान्तानुसारम् । शाब्दिकानां स्वीकृता बाह्यसत्तैव लोकव्यवहारानुसारिणी, तस्याश्रयेणापि नञर्थस्योपपत्तिः सिद्धा । तथा च भर्तृहरिणा यत्सम्बन्धसमुद्देशे प्रतिपादितम्, तद्विरुद्धमपि मतं साधनसमुद्देशे प्रतिपादितम् । साधनसमुद्देशोक्तं मतमेव व्याकरणपरम्परानुकूलम्, महाभाष्यकारेणाऽपि तदङ्गीकृतम् । इदमेव स्वीकर्त्तव्यम् ।

अपरं समाधानम्- 'अङ्कुरो जायते' इत्यादिप्रयोगोपपत्त्यर्थमुपचार-सत्तास्वीकरणमावश्यकमिति न वाच्यम् । वस्तुतस्तु "चैत्रः कटं करोति, पाठं कुरु, ग्रन्थारम्भे मङ्गलाचरणानन्तरं ग्रन्थकृदुक्तिर्बालानां सुखबोधाय क्रियते तर्कसंग्रहः, अभ्युदयाय प्रयतते, आत्मनो मरणाद् बिभेति, भाविपुत्रजन्मना तुष्यति" इत्यादिवाक्यानामुपपत्तये या प्रक्रिया शाब्दिकैराश्रीयते, सैव प्रक्रिया 'अङ्कुरो जायते' इति वाक्यस्य प्रयोगोपपत्तये आश्रयितव्या । अत्र का सा प्रक्रिया ? अथोच्यते– सिद्धसाध्ययोर्भेदः सर्वैर्दार्शनिकैरङ्गीक्रियते । 'चैत्रः कुठारेण वने वृक्षाच्छुष्कशाखां छिनत्ति' अस्मिन्वाक्ये सर्वाणि कारकाणि सिद्धानि, साध्या तु क्रिया, नियमतो छेदनाकूलव्यापारः,, साध्यश्च पुनः शाखाविच्छेदः, व्यापारेण कर्मणि फलोपपत्तिः । परन्तु नास्त्ययं नियमः सिद्धेषु कारकेष्वेव कारकत्वम्, अत एव 'कटं करोति' इति वाक्येऽसिद्धेऽपि कटे कर्मत्वं संगच्छते । यदि कटो वर्तते, किं तर्हि क्रियते ? कटस्य साध्यत्वं त्वत्र स्पष्टम् । 'चैत्रेण किं क्रियते' इति प्रश्ने यः पदार्थो व्यपदिश्यते, तत्रैव डुकृञ्धातोः कर्मत्वम् । प्रश्नोत्तरस्थले क्रियमाणोऽनारब्धो वा कटोऽत्र व्यपदिश्यते । न हि कटः साध्यः, इत्यनेन तस्य कर्मत्वं नोपपन्नम् । एवमेव 'पाठं कुरु' इति द्वितीयवाक्येऽपि पाठो न सिद्धरूपेणेदानीं विद्यते, तथापि तत्र

कर्मत्वं शिष्टप्रयोगदर्शनेन सिद्धम् । तथा च बालानां सुखबोधायेति तृतीयवाक्ये न तर्कसंग्रहो ग्रन्थः सिद्धः, नापि बालानां सुखबोधरूपपदार्थः, परन्तु तयोः कर्मत्वं चतुर्थीत्वञ्च यथावद्वर्तते । एवमेव च तुरीये वाक्ये, असिद्धेऽपि स्वमरणेऽपादानत्वं विहितं वर्तते । तथा च पञ्चमवाक्येऽसत्यपि वर्तमानकालेऽभ्युदये तस्य चतुर्थीत्वमक्षुण्णम् । एवमेव षष्ठवाक्ये भाविपुत्रजन्मरूपपदार्थस्य करणत्वं निर्बाधम् । पुनश्चातीतो दिवसः, अनागतो दिवसः, इत्यादिपदश्रवणात् कथं शाब्दबोधः ? श्वः यास्यामि, इत्यत्र श्वः पदेनाभिहितेऽनागते दिवसे कथमधिकरणता ? अतः स्पष्टमेतत् न क्रियाकारकव्यवहारः केवलान् सिद्धपदार्थानाश्रित्य सङ्घटते । न च पदार्थस्य साध्यरूपत्वात्तस्य शाब्दबोधे बाह्यसत्तामपहायोपचारसत्तानामधेयेन काल्पनिकतत्त्वेन प्रक्रियानिर्वाहो भविष्यति । अत एव इग्यणः सम्प्रसारणसूत्रव्याख्यानावसरे भगवत्पतञ्जलिप्रदर्शितमार्गोऽनुसरणीयोऽत्र । नासौ मार्गो मुख्यसत्तोपचारसत्ताभेदमाश्रयते । अतोऽङ्कुरो जायत इत्यत्र जनिक्रियायाः कर्त्तृत्वं भाविनीसंज्ञाविधानेन सूपपन्नम् ।

अत्र व्याकरणदर्शनप्रतिमायां (पृ.११४) रामज्ञा पाण्डेयाः "तथैवात्रापि भविष्यदङ्कुरे लक्षणया प्रयोगः समर्थ्यते" इति प्रतिपादयामासुः । एतन्न समीचीनं प्रतिभाति । अनुपपन्ने हि शक्यार्थे लक्ष्यार्थेन प्रक्रियानिर्वाह इति सर्वसम्मतसिद्धान्तः । अत्रानुपपन्नत्वं तु शक्यार्थेऽन्वययोग्यताऽभावत्वम् । तस्माद् रामाज्ञापाण्डेयोक्तः लक्षणया प्रक्रियानिर्वाहो नात्र मनोरमः प्रतीयते । शक्यार्थेऽन्वययोग्यताभावस्तदेवोपपद्यते यदा सिद्धेष्वेव कारकत्वमिति नियमोऽङ्गीक्रियते । नास्ति नियम एतादृश इत्युक्तं पूर्वमस्माभिः । अतोऽङ्कुरो जायते, इत्यत्र जायमानेऽङ्कुर उत्पत्त्याश्रये कर्त्तृत्वं, भाविनि साध्यरूपदार्थे उपपद्यते । तथा चात्र को जायते, इति प्रश्नोत्तरस्थले यः पदार्थो निर्दिश्यते स बीजाद् उत्पद्यमानसाध्यरूपे न तूपचारसत्तारूपकाल्पनिकतत्त्ववान् इति । अतोऽङ्कुरो जायते, इति प्रयोगोपपत्त्यर्थमुपचारसत्ताकल्पनं व्यर्थमेवेति सिद्धम् ।

अत्र तार्किकसम्मतिः– न च 'अङ्कुरो जायते' इति वाक्यजन्यशाब्दबोधान्यथानुपपत्त्या बौद्धार्थः सिध्यतीति वाच्यम् । तार्किकाः सुब्रह्मण्यशास्त्रिणोऽत्र नागेशभट्टस्य बौद्धार्थवादिनाञ्च वैयाकरणानाम्मतं

शाब्दतरङ्गिण्यां (पृ.८९) समालोचयन्ति-''अङ्कुरो जायते, इति वाक्यादङ्कुर उत्पत्त्याश्रय इति बोधः। यद्यपि बोधविषयोऽङ्कुरे बोधकाले नास्ति, तथापि न बोधानुपपत्तिः । प्रत्यक्ष एव विषयस्य कारणत्वात् । शाब्दबोधे विषयस्याकारणत्वात् । न च ज्ञानसामान्ये विषयकारणमिति वाच्यम् । अतीतानागतादिविषयकपरोक्षज्ञानोदयेन तथा कार्यकारणभावस्य वक्तुमशक्यत्वात् । न चातीतादिस्थलेऽपि बौद्धार्थस्य सत्त्वान्न कार्यकारणभावानुपपत्तिरिति वाच्यम् । बौद्धार्थसाधनावसरे सिद्धवत्तथा कथनस्यासङ्गतत्वात् । तस्मादङ्कुरो जायत इति वाक्यजन्यबोधानुपपत्त्या न बौद्धार्थः सिध्यति'' इति । एवमेव प्रक्रियाप्रदर्शनेन वैयाकरणा अपि व्यवहारं संसाधयितुं सक्षमाः सन्ति । वस्तुतः कस्यामपि भाषायां वाग्व्यवहारे बौद्धार्थो नावश्यकः । ये अद्वैतिनस्त एव लौकिकव्यवहारं परमार्थतः सद्रूपेण न स्वीकुर्वन्ति । तन्मते तु ब्रह्मैव सद्, जगदिदं तद्विवर्त्तः जगदसद् इति संसाधयितुं बौद्धार्थस्तैरेव कल्पितः । किञ्च सोऽसद्रूपेण भ्रमाकारको न वास्तवः, तस्माद् यथार्थवादिनो वैयाकरणास्तार्किका मीमांसकाश्च कदापि बौद्धार्थं नाङ्गीचक्रुः ।

### (उ) 'अस्ति' इत्यस्यार्थोऽपि मुख्यसत्तायामनुपपन्नस्तत्समीक्षा च

'अङ्कुरोऽस्ति' इत्यत्र जन्मोत्तरकालभाविनमस्तित्वमुप— चारसत्तासमाविष्टमेवास्तीति शब्दः प्रतिपादयति । अतो भर्तृहरिरेतद्वक्तुं शशाक—

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ वाक्यपदीयम् ३/३/४७.
प्राक् च सत्ताभिसम्बन्धान्मुख्या सत्ता कथं भवेत् ।
असंश्चन नास्तेःकर्त्ता स्यादुपचारस्तु पूर्ववत् ॥ वाक्यपदीयम् ३/३/४८.

'अस्ति' इत्यस्य भावविकारस्य व्याख्याने महर्षियास्केन निरुक्ते (१/२) निरुक्तम्— ''अस्तीत्युत्पन्नस्य सत्त्वस्यात्मधारणम्'' इति । अस्मिन्नर्थे धारणक्रियायाः कर्त्ता, कर्म च एक एव भवति । स एको मुख्यसत्तायामसम्भवः । स्वतन्त्रः कर्त्ता, कर्म तु परतन्त्रम्, अत एव मुख्यसत्तायामसम्भव ऐक्यसम्बन्धः परस्परविरोधात् । उपचारसत्तायां त्वेकस्यामेव कर्तृत्वं कर्मत्वं च प्रकल्प्य व्यवहारः प्रवर्तते । अत्रोक्तकर्म

धात्वर्थस्यैवाङ्गम् । अत एव धातोः सकर्मकताया अप्रयोजकम् । अत एव 'जायते' इत्यादिक्रिया अकर्मिकैव । एवञ्चात्रापि मुख्यसत्तायां कर्तृत्वानुपपत्तिः 'जायते' इतिवत् प्रसज्यते । 'अङ्कुरोऽस्ति' इत्यत्रास्तिपदेन साध्यावस्था प्रतीयते, अतोऽस्तिक्रियायाः कर्त्ता सिद्धावस्थावस्थितो न भवति । सिद्धसाधनाभावे बाह्येऽप्यस्तिक्रियाऽसम्भवा । कारणं हि साधनस्य सम्बन्धं विना कथं क्रियोपपद्यते । मुख्यसत्तायां साध्यसाधनयोरेकया क्रियया सहोपपत्तिरसम्भवा । योऽधुना सत्तामनुभवति स कथं सिद्धः । चेत् सिद्धस्तर्हि साध्यो न भवितुं शक्यते । एकस्याः सिद्धता साध्यता च बाह्ये नये घटितुं न शक्यते । अत उपचारसत्ता स्वीकरणीया । हेलाराजेनापि वाक्यपदीये (३/३/४७) उक्तमेव— "लब्धात्मलाभस्यात्मधारणलक्षणा सत्ता बुद्ध्या पूर्वापरीभूततयैवाभिधीयते । तत्र चोपचारसत्तारूढस्य पूर्वभागः कर्त्ता, तदपरस्तु साध्यः कर्म, तदुभयाश्रयक्रियास्वरूपान्तर्भूतमिति पूर्वं जायत इतिवद् उपचारसत्तया कर्त्तृत्वमाश्रित्यास्तीति प्रयोगोपपत्तिः" इति ।

तदेवम् 'अस्ति नास्ति जायते' इति प्रयोगत्रयमुचारसत्तासमाश्रयेण समर्थनीयम् । एष्वेव त्रिषु भावविकारेष्वपरेऽपि त्रयोऽन्तर्भावनीयाः । तथा हि 'अस्ति नास्ति' इति द्वयोरेवान्येषां भावविकाराणामुपपत्तिः कर्त्तव्या । तथा 'अस्ति' इत्यत्रैव पूर्वावस्थायां 'जायते' इति, ततो 'अस्ति' इति, ततः 'परिणमते' ततो वर्धते' इति । 'नास्ति' इत्यत्र तु 'अपक्षीयते, नश्यति' इत्यनयोरन्तर्भावः । एतत् सर्वम् औपचारिकमेव मन्तव्यं न तु वास्तविकम् ।

तस्मादेव उपचारसत्तायाः सर्वत्र व्याप्तिं प्रदर्शयामास—

तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम् ।
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम् ॥ वाक्यपदीयम् ३/३/४९.

अभिन्नकालामर्थेषु भिन्नकालेष्ववस्थिताम् ।
प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम् ॥ वाक्यपदीयम् ३/३/५०.

एतां सतां पदार्थो हि न कश्चिदतिवर्तते ।
सा च सम्प्रतिसत्तायाः पृथग्भाष्ये निदर्शिता ॥ वाक्यपदीयम् ३/३/५१.

समीक्षा- न ह्यत्रोपचारसत्ताश्रयणं समीचीनम् । महाभाष्यकारेण 'कर्मवत्कर्मणा तुल्यक्रियः' इति पाणिनिसूत्रे (३/१/८७) उक्तं हि—

"आत्मसंयोगे कर्मकर्त्तुः कर्मदर्शनात् । आत्मसंयोगे कर्मकर्त्तु : कर्म दृश्यते। क्व ? हन्त्यात्मानम्, आत्मना हन्यते । विषम उपन्यासः, हन्त्यात्मानम् इति कर्म दृश्यते कर्त्ता न दृश्यते । आत्मना हन्यते इति च कर्त्ता दृश्यते न कर्म दृश्यते । ——पदलोपश्चात्र द्रष्टव्यः । हन्त्यात्मानमात्मा, आत्मना हन्यते आत्मा इति । कः पुनरात्मानं हन्ति ? को वात्मना हन्यते ? द्वावात्मानौ शरीरात्मा अन्तरात्मा च । शरीरात्मा तत्कर्म, येनान्तरात्मा सुखदुःखे अनुभवति, अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति "इति (३/१/ ८७) । अस्य मतस्यानुसारेण कौण्डभट्टेन भूषणग्रन्थ उपपत्तिः प्रदर्शिता । अत उपचारसत्तासमाश्रयणमसमीचीनमिति सिद्ध्यति । यथा बृहद्वैयाकरणभूषणे धात्वर्थनिर्णये (पृ. ५१)-" आत्मानं जानाति इत्यादौ चात्मभेदः कल्प्यते, एकः शरीरावच्छिन्नः अपरस्तु अन्तःकरणावच्छिन्नस्तत्रान्तःकरणावच्छिन्नः कर्त्ता चेच्छरीरावच्छिन्नः कर्म, तथा च फलव्यापारयोर्भिन्ननिष्ठत्वाक्षतेः सकर्मकत्वं नासिद्धम्" इति । एवमपि पुनर्लिलेख -"आत्मानमात्मना हन्ति इत्यत्र कर्मसंज्ञोपपादनं शरीरमनोरूपमवच्छेदकभेदमादाय कृतं भाष्ये" इति (पृ. ९८) च ।

एवमेव महर्षिपतञ्जलिकौण्डभट्टादीनामुद्धरणैर्बाह्यसत्तापक्ष एव युक्तिसम्मत इत्यत्र सिद्धम् । यदि महाभाष्यकृतां कौण्डभट्टादीनाञ्च समादृतो बौद्धार्थ आसीत्तर्हि कथं न तैः स्पष्टं बौद्धार्थस्य प्रसङ्गे सत्यपि किञ्चिदुक्तम् । अत औपाधिकभेदकल्पनेन बौद्धार्थो निरस्तो शब्दतत्त्वविदां परम्परायाम् । वस्तुतो नात्र 'शरीरात्मान्तरात्मा' इति भेदद्वारेण प्रक्रियानिर्वाहः कर्त्तव्यः । एकस्मिन्नुपाधिभेदाद्भेदोऽपि सम्भवति । यथा शयानो देवदत्तोऽवस्थाभेदाद् आसीनाद्देवदत्ताद्भिन्नः ।

## ५. निष्कर्षः

अत्र भर्तृहरिप्रतिपादितमुपचारसत्तासाधकमतं न व्याकरणपरम्परानुकूलम्, अपि तूत्तरमीमांसाप्रतिपादिताद्वैतवादसिद्धान्तानुसारम् । अतोऽस्य स्वीकरणे व्याकरणशास्त्रस्यैकाङ्गत्वं समापद्यते । अस्मात् कारणादयं वादः परवर्तिभिर्भट्टोजिदीक्षितकौण्डभट्टादिभिः शाब्दिकैरस्वीकृत आसीत् । एवमेव पूर्ववर्तिभिः पाणिनिकात्यायनपतञ्जलिभिर्न बौद्धार्थः (उपचारसत्ता वा)

प्रतिपादितः । तथा चोपचारसत्ताकल्पनार्थं यः कार्यकारणभावः सम्बन्धोऽत्र प्रतिपादितः, स तु न्यायशास्त्रदृष्ट्याऽपि सर्वथा प्रत्याख्यातः । भर्तृहरिप्रपञ्चिता बौद्धार्थसाधकयुक्तयस्तासां प्रत्याख्यानञ्चोपपति–प्रदर्शनपूर्वकमिह विशेषभावेन कृतम् । घटो नास्ति, घटोऽस्ति, अङ्कुरो जायते, इति प्रयोगाणामुपपत्तिरुपचारसत्तां विना केवलेन बाह्यार्थेनैव संसाध्य, बौद्धार्थः प्रत्याख्यात एवेति निष्कर्षः सुधीभिराकलनीयः ।

---

## चतुर्थं पर्यालोचनम्

# प्रकाशप्रदीपकौस्तुभभूषणाश्रितानां बौद्धार्थसाधकयुक्तीनां समीक्षा

टीकाकर्तृवैयाकरणा महाभाष्यवाक्यपदीयटीकासु बौद्धार्थप्रपञ्चं वितेनिरे। परञ्च बौद्धार्थप्रपञ्चमद्वैतानुकूलं विज्ञाय न्यासकारभट्टोजिदीक्षित-कौण्डभट्टप्रभृतयो नव्यशाब्दिकास्तमस्वीचक्रिरे।

### १. प्रकाशे बौद्धार्थसाधिकानां युक्तीनां समीक्षणम्

बौद्धार्थवादिभिः हेलाराजकैयटनागेशादिभिर्महाभाष्यस्य कदर्थनं कृत्वा बौद्धार्थो वैयाकरणसिद्धान्त इति समुद्घोषितम्। अतोऽत्र तेषां बौद्धार्थवादिनां गृहीततर्कान् संस्थाप्य तेषां प्रत्याख्यानं परामृष्टम्। हेलाराजकैयटनागेशादिभिः प्रतिपादितं दुष्टं व्याख्यानं सुधीभिर्न स्वीकरणीयमित्यस्मिन्नध्याये निरूप्य न्यासकारस्य बौद्धार्थो नाभिप्रेत इत्यपि यत्र तत्र प्रदर्शितम्। तथा च वैयाकरणधुरन्धरैर्भट्टोजिदीक्षितैरपि बौद्धार्थवादस्तिरस्कृतः। तथैव कौण्ड-भट्टेनापि शशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धये उपचारसत्तां विना, अभिधयैव प्रातिपदिकत्वसिद्धिः प्रदर्शिता। अतो बाह्यार्थवादिनामेषां वैयाकरणानाम्मतं मुनित्रयानुकूलं प्रतिभातीति प्रमाणितम्। तच्च युक्तिसिद्धमतः स्वीकरणीयमिति प्रतिपाद्यते।

## (अ) क्रियाकारकव्यवहारोऽपि बौद्धसत्तया सङ्गटते

बौद्धार्थवादिनः सङ्गिरन्ते, वाक्यार्थो बौद्धसत्तायुक्तो बुद्ध्यात्मकश्चास्ति। अर्थः सर्वदाऽन्तरिको बुद्ध्या सहावमृष्टो लभ्यते। तथा च वाक्यगतपदार्थानां परस्परसम्बन्धेऽपि बाह्यासत्तायाः प्रवेशो न। अतः क्रियाकारकभावसम्बन्ध उपचारसत्तयैवोपपन्नः सिध्यति।

तिङ्वाच्या क्रिया तु साध्या, साध्यमानायाः प्रयोगकाले तस्या निष्पत्तिरसम्भवा। क्रियाभावे साधनत्वमप्यनुपपन्नम्। अत एवोपचारसत्ताश्रयेण बौद्धतिङर्थमादाय साधनभावोपपत्तिः। अतः प्रणिजगाद–

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः।
सन्नसन् वाऽर्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते॥ वाक्यपदीयम् ३/७/३.

अत एव हेलाराजेन विवेचनमकारि– "क्रियाकारकभावेनाप्यर्थानां निरूपणं बौद्धमेव। तथा हि भाव्यमानत्वादेव क्रिया सम्प्रति नास्ति। तदभावात् तदपेक्षं साधनत्वमपि कुतः" इति (३/३/ ५०)। अतो बौद्धार्थः स्वीकार्यः।

## (इ) क्रियाकारकव्यवहारो बाह्यसत्तयैवेति भर्तृहरितात्पर्यम्

अत्र क्रियाकारकभावसम्बन्धः पदार्थानां बौद्धसत्तयैव सिध्यतीति बौद्धार्थवादिनां पक्षः। अत्रोच्यते-क्रियाकारकभावसम्बन्धानां बाह्यपदार्थेषु विद्यमानानां बुद्धिविषयकृतानां बौद्धत्वमेव युक्तम्। न तदर्थं भिन्नोपचारसत्ता कल्पनीया भवति। यथा हि लोके संसारे प्रवर्तमानानां जनानां क्रियात्वकारकत्वसाधनत्वादयः सर्वेऽपि बाह्यास्तथैवाऽन्योऽपि लौकिको जनो बाह्यार्थसत्तां बुद्ध्या विषयीकृत्य क्रियासु प्रवर्तते, साधनानि चादत्ते। अत एवोच्यते भर्तृहरिणा–

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः।
सन्नसन्वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते॥ वाक्यपदीयम् ३/७/३,

अस्याः कारिकाया अयमर्थः, क्रियासु साधनव्यवहारे विषयीकृतबुद्ध्यवस्थारूपबुद्धिवृत्तिनिबन्धनो बुद्धिवृत्त्याधीन इत्यर्थः। अयं व्यवहार एवार्थरूपेषु क्रियासु च निवर्तकत्वात् सन् अस्ति, साधनस्यैव क्रियारूपार्थकत्वाद असन्नपि अस्ति, इत्यनया बुद्ध्या सदसदात्मको भेदः

प्रकल्पित एव । अयं भावः साधनमेव क्रियां निवर्तयतीत्युच्यमाने साधनं क्रियाभिन्नम् । किन्तु साधनमेव, व्यापार एव क्रिया इत्युच्यमानेऽभिन्नः । अतः साधनस्यैव क्रियया भेदो बुद्धिप्रकल्पितः, एवमेवाभेदोऽप्यूह्य इति कारिकार्थः । हेलाराजस्तु शास्त्रान्तरवासनयान्यथा व्याचष्टे । अतो हेलाराजव्याख्यानमत्र न भर्तृहरेस्तात्पर्यमनुगच्छति । तथा च बौद्धार्थो न क्रियाकारकभाव-सम्बन्धार्थमित्यपि सिद्धम् ।

## (उ) अतीतानागतावस्थायां बाह्यार्थाभावे बौद्धार्थेनैव बोधः

बाह्यसत्ताया अतीतानागतकालेऽभावाद् बौद्धार्थोऽङ्गीकार्यः । अतो हेलाराजः प्रकाशटीकायां (३/३/९) प्रतिपादयाञ्चक्रे–"एवं चातीतानागता-दिशब्दानामप्यर्थसद्भावात् सम्बन्धनित्यतास्त्येव" इति । एवमपि बाह्यसत्ता तु साम्प्रतिकी नियता, तस्या अतीतानागतस्थलेऽभावः । परञ्चोपचारसत्ता सर्वत्रव्याप्ता, अत एव तस्याश्रयेणातीतानागतकालिकप्रयोगा संभवन्ति । शब्दप्रवृत्तिषूपचारसत्ताया निमित्तत्वमत एव भर्तृहरिणा सुविहितम्-

अभिन्नकालामर्थेषु भिन्नकालेष्वस्थिताम् ।

प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम् ॥ वाक्यपदीयम् ३/३/५०.

तत्रैव हि हेलाराजो व्याख्याञ्चकार-"अतीतानागतकालव्यापित्वाच्च नियतकालेष्वपि बाह्येष्वर्थेष्वियमभिन्नकाला सार्वत्रिकी । तथा हि विद्यमानोऽपि वर्तमानकालिकोऽर्थो यावद् बुद्ध्या नावधृतस्तावदविषयः शब्दानामिति सर्वत्रोपचारसत्तासमारूढ एव शब्दार्थ इत्युक्तं भवति" इति प्रकाशे (३/३/५०) । अतो बौद्ध एवार्थ इति स्वीकर्त्तव्यम् ।

## (ऋ) अस्य वादस्य प्रत्याख्यानम्

अत्रेदं वक्तव्यम्, बौद्धार्थवादिभिरुपचारसत्तासिद्धये यो हेतुरत्र प्रस्तुतः स तु हेत्वाभासः । कालप्रयोगव्यवस्था तु महाभाष्यमतानुसारं वैयाकरणभूषणसारे लकारार्थनिर्णये (का. १) कौण्डभट्टेन सुष्ठु निरूपिता । यथोक्तम्-"आत्माऽस्ति, पर्वताः सन्ति, इत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योपपत्त्यादिकमादाय वर्तमानत्वमूह्यम् । उक्तं हि महाभाष्ये- 'इह भूत भविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्' इति"

(३/२/१२३) । तथा च सिद्धान्तभाष्यमिदं कैयटोऽपि प्रदीपे (३/२/१२३) व्याचष्टे''—तत्र राज्ञां स्थितिः भूतादिभेदेन भिन्नाः पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपत्वं कालत्रययोगश्चोपपद्यते'' इति । एवमेव भर्तृहरिणा समर्थितम्—

परतो भिद्यते सर्वमात्मा तु न विकल्पते ।

पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥ वाक्यपदीयं कालसमुद्देशः ८०.

अत्रायमाशय :- पर्वताः सन्ति, पर्वता आसन्, इत्यत्र बाह्यार्थे पर्वतरूपे विद्यमानेऽप्यतीतवर्तमानप्रयोगयोर्बाह्यार्थभूतानां पर्वतानां प्रयोगकालेऽपि वर्तमानानाम् 'आसन्' इति प्रयोगोऽसङ्गतः । किञ्चात्र बाह्यार्थरूपेण सत एव राजपदार्थस्येदानीं त्वसतो बुद्धिविषयीकृत्य तद्वर्तमानकालेऽपि 'पर्वता आसन्' इति प्रयोगस्य साधुत्वमापद्यते । एवमेवेदानीन्तनानां राज्ञां स्थितिमधिकृत्य पर्वताः सन्तीति प्रयोगोऽपि सूपपन्नः । अत्र भाष्यकृता बौद्धार्थस्य कल्पनाऽपि न कृता, प्रत्युत बाह्यार्थस्य बाह्यसत्तामेव स्वीकृत्योभयोः प्रयोगयोः साधुत्वं प्रदर्शितम् । साधुत्वहेतुश्च,तत्तत्कालिकराज्ञां बहिर्जगति स्थितिमाह । अनेनैव भाष्यप्रयोगेण बौद्धार्थस्वीकारे हेतुभूत उपर्युक्तशङ्काग्रन्थोऽथवा बौद्धार्थसाधकग्रन्थः सर्वथा प्रत्याख्यातो भवति ।

## २. महाभाष्यकारस्यापादानसूत्राणां प्रत्याख्यानं बौद्धपदार्थदृष्ट्या

अत्र बौद्धार्थवादिनो वदन्ति—''कुरुभ्यः पाञ्चाला अभिरूपतरा'' इत्यत्र पञ्चमीविधानार्थं ''पञ्चमी विभक्ते. ''इति (पा. २/३/४२) सूत्रं भाष्ये प्रत्याख्यातम् । बौद्धस्यापादानस्य सम्भवादपादानम् इत्येव पञ्चम्याः सिद्धिः । अत एव बौद्धमेव साधनव्यवहारं परिकल्प्य वस्तूनां सत्ता न प्रयोजिकेति सिद्धान्तः परिवहनीयः । इदमेव ब्रह्मास्त्रं समुपस्थाप्य सर्वेऽप्यापतन्तो दोषा दूरीकरणीयाः । अत उक्तम्—

बुद्ध्या समाहितैकत्वान् पञ्चालान् कुरुभिर्यदा ।

पुनर्विभजते वक्ता तदापायः प्रतीयते ॥ वाक्यपदीयम् ३/७/४.

अत एवात्र बौद्धमेव साधनव्यवहारं परिकल्प्य बहूनां ''भीत्रार्थानां भयहेतुरित्यादीनां'' सूत्राणां (पा. १ /४/२५-३१) प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । एवं सति बुद्ध्या साधनव्यवहारोपपत्तौ एकस्यापि वस्तुनः शक्तिनानात्वं बौद्धं समुपपद्यते । अत एव'' भीत्रार्थानां भयहेतुः ''इत्यादीनां

(१/४ / २५-३१) सूत्राणां निर्देशोऽबुधप्रतिपत्तये एव । बुधास्तु'' ध्रुवमपायेऽपादानम् ''(पा. १/४/२४) इत्यनेनैवापादानं साधयन्ति । यथाह—

निर्धारणे विभक्ते यो भीत्रादीनां च यो विधिः ।

उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ॥ वाक्यपदीयम् ३/७/१४७,

''रूपं रसात् पृथग् इत्यादावपि बुद्धिपरिकल्पितमपादानत्वं नानुपपन्नम् इति बृहद्वैयाकरणभूषणकारो (पृ. ११२) जग्राह । एवञ्च 'कूपादन्धं वारयति, अग्नेर्माणवकं वारयति' इत्यादौ बुद्ध्या कूपाग्निसम्प्राप्तिमनिष्टहेतुं मन्यमानोऽनुकम्पया ततो निवर्तयतीतिबुद्धिसंश्लेषपूर्वकोऽपायः । अत एव बौद्धपदार्थानङ्गीकारेऽपायव्यवस्थापि न सम्भवति ।

## (अ) तत्समीक्षा

इदमत्रावधेयम्, भीत्रार्थानां भयहेतुरित्यत आरभ्य कतिपयसूत्राणां न्यासो न कर्त्तव्यः, ध्रुवमपायेऽपादानमित्यत एवाभीष्टसिद्धेः । अत्र बौद्धार्थस्य चर्चैव नास्ति, अपि तु बाह्यार्थे भीत्रार्थानामित्यादिसूत्रैर्यापादानसंज्ञा सूत्रकारेणोच्यते, ध्रुवमपायेऽपादानमित्यत एव सा सिध्यतीत्येव भाष्याशयः । यथात्रैव सूत्रे (पा.१/४/२४) जुगुप्साविरामप्रमादार्थामुपसंख्यानम् इति वार्त्तिकमुपन्यस्य जुगुप्सते, वीभत्सते, विरमति, निवर्तते, प्रमाद्यति, मुह्यति, इत्यादिक्रियाप्रयोगेष्वधर्मादीनां ध्रुवत्वाभावाद् धर्माधर्मयोः बाह्याकारसत्तादर्शनात् कथं धर्माधर्मयोरपादानत्वम् ? कृतेऽपि परिगणने सम्भवति । यथा ग्रामादागच्छति, इत्यत्र ग्रामस्य बाह्याकारा सत्ता वर्तते, अत एव बाह्यार्थस्य सूत्रेणापादानसंज्ञा क्रियते । तदनन्तरं ''अपादाने पञ्चमी'' ग्रामादागच्छतीति वाक्यसिद्धिः । किञ्च धर्माधर्मयोस्तादृशबाह्यार्थत्वासिद्धे, कृतेऽपि कथं ध्रुवत्वसिद्धिं विनाऽपादानसंज्ञा ? कथं च पञ्चमी ? इत्याशङ्क्योच्यते ''य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति, दुःखोऽधर्मो नानेन कृत्यमस्ति इति स बुद्ध्या प्राप्य निवर्तते'' (महाभाष्ये १/४/२५) । तथात्वे च ध्रुवमपायेऽपादानमित्यत एव सिद्धम्, न कृतमुपसंख्यानेन । उपसंख्यानमन्तरा अप्युक्तभाष्येणापादानसंज्ञा सिध्यति । अतो वार्त्तिकं न कर्त्तव्यमिति भाष्याशयः ।

किञ्च बौद्धार्थवादिनो 'य एष मनुष्यः प्रेक्षापूर्वकारी' इत्यस्य भाष्यस्य तात्पर्यमन्यथैवावगच्छन्तः, इदं भाष्यं बौद्धार्थसिद्धौ योजयन्ति तत्सर्वं भाष्याशयविरुद्धम् । वस्तुतो यः कोऽपि मनुष्यो यस्मिन्कस्मिन्कर्मणि स्वप्रवृतेः पूर्वं बाह्यार्थं धर्मशास्त्रं बुद्धिविषयीकृतं पश्यति स्मरति, तथा च बाह्यार्थभूतशास्त्रवर्णितदुःखप्रदोऽधर्मप्रदोऽयं मार्ग इति विचार्य बुद्ध्या दुःखप्रदमधर्ममार्गं बाह्यार्थभूते शास्त्रे वर्णितं सम्प्राप्य विज्ञाय ततो निवर्तते । एवञ्चाधर्मादधर्ममार्गान्- निवर्तते । एवञ्च बुद्धिविषयीकृतमधर्ममार्गं ध्रुवीकृत्य ध्रुवत्वेनावधित्वेन निश्चित्य ततो निवर्तते । अतो ध्रुवमपायेऽपादानमिति सूत्रेणैवाधर्मस्य ध्रुवसंज्ञासिद्धौ 'अधर्माद् विरमति' इत्यादि प्रयोगसिद्धिः, किमुपसंख्यानेनेति ? उपसंख्यानवार्त्तिकप्रत्याख्याने एव भाष्यकृतामाशयः प्रकरणादिना सुस्पष्टं लभ्यते । किञ्चानेनैव भाष्येण बौद्धार्थसत्तासाधनं त्वतिसाहसिकमेव बौद्धार्थवादिनाम् ।

बौद्धार्थे एव भाष्यकृतामाशयश्चेत्, स बौद्धार्थं सम्प्राप्य ततो निवर्तते, इत्येवं वदेयुः, प्रत्युतात्र तु विषयीकृतबाह्यार्थया बुद्ध्या तत्त्वं संप्राप्य निवर्तते, इति भाष्याशयः सुस्पष्टमवगम्यते । अतो नेदं भाष्यं बौद्धार्थसत्तासिद्धौ प्रमाणभूतम् । इतोऽग्रे चापि ''गतियुक्तेष्वपादानसंज्ञा नोऽपपद्यतेऽध्रुवत्ववात्, न वा ध्रौव्यस्याऽविवक्षितत्वात्'' (म. १/२/२४ वा. २-३) इत्यनयोर्वार्त्तिकयोः भाष्यावलोकनेन किं ध्रुवत्वं बाह्यार्थस्य, यस्यापादान संज्ञा चिकीर्षिता ? इत्याशङ्कायां बाह्यार्थस्य ध्रुवत्वसंज्ञाविवक्षाधीना, यत उदाजहार-'' अश्वात् त्रस्तात् पतितः, रथात् प्रवीतात् पतितः, सार्थाद्गच्छतो हीनः'' । उदाहृतेषु सर्वेषु बाह्यार्थेषु ध्रुवत्वं विवक्षाधीनम्, इत्यध्रुवत्वेऽपि बाह्यार्थेऽश्वादौ ध्रुवत्वं विवक्षितं साधितम् । यतश्चास्यैव सूत्रस्यान्त्ये उच्यते -''कथं पुनः सतो नामाविवक्षा स्यात्'' अस्याशयस्तु बाह्यार्थस्य सतोऽपि अविवक्षा कथं स्यात् ? समाधानभाष्यं-''सतोप्यविवक्षा भवति'' सतोऽपि बाह्यार्थस्य ध्रुवत्वविवक्षा भवति। यथोदाजहार-''अलोमिकैडका, अनुदरा कन्या'' । बाह्ये जगति सलोमिकैडकाः दृश्यन्ते, उदरसहिताश्च कन्याः । किञ्च तथाभूतस्य बाह्यार्थस्य तात्पर्यविशेषे सतोप्यविवक्षा भवति । अत एवोच्यते-सलोमिकैडका, अलोमिकैडका, उदरसहिता कन्या अनुदरा कन्या, अत्यल्पोदरा कन्या, अत्यल्पलोमिकैडका इति सर्वमप्युदाहरणजातं बाह्यार्थस्य सत्तयैव । न बौद्धार्थे भाष्यकृतां किञ्चिदपि तात्पर्यम् ।

अन्येष्वपि भीत्रार्थानामित्यादिषु सूत्रेष्वप्येषैव गतिरस्ति । बौद्धार्थवादिनो भाष्याशयं पदे पदे कदर्थयन्तो दृश्यन्ते । अतो विचारितर-मणीयबौद्धार्थस्वीकरणं तेषामेव मनोमोदाय, नास्माकं शाब्दिकानां तत्रादरः ।

अत्र अस्माभिर्यः प्रकारः प्रदर्शितः, स एव न्यासकारानुमोदितः । न च बौद्धार्थं व्याकरणशास्त्रप्रक्रियायां न्यासकाराः स्वीचक्रुः । विनैव बौद्धार्थं सर्वत्र पाणिनिसूत्राणि विवेचतानि । प्रसङ्गवशादपादानसूत्राणां न्यासकारस्य विवेचनं(न्यासे १/४/२५) बाह्यार्थपक्षे प्रमाणभूतं समुपस्थापयामि- "न हि कायसम्प्राप्तिपूर्वकः स्वापायो भवति, किं तर्हि ? बुद्धिसम्प्राप्तिपूर्वकोऽपि । अस्ति चेह बुद्धिसंप्राप्तिपूर्वकोऽप्यपायः, तथा हि चौरेभ्यो विभेतीत्यत्र यस्तावत् पुरुषः प्रेक्षावान् भवति स एवं पश्यति -यदि मां चौराः पश्येयुर्ध्रुवं मे मृत्युः, इति विचारयंस्तान् बुद्ध्या प्राप्नोति, प्राप्य च ततो निवर्तते । तत्र ध्रुवमित्यादिनैव सिद्धम्" इति । एवमेव "अस्ति ह्यत्राध्ययनाद् बुद्धिसंसर्गपूर्वकोऽपायः, तथा हि य एव पुरुषोऽलसो भवति, स एवं मन्यते दुःखायैवैतदध्ययनमिति पश्यन् बुद्ध्या तत्प्राप्नोति, प्राप्य च ततो निवर्तते, तस्मात् पूर्वेणैव सिद्धम्" इति न्यासे (१/४/२६) पेठुः । अतो महाभाष्यकृतापादानसूत्रप्रत्याख्यानं बौद्धार्थं न साधयतीति सिद्धम् ।

महाभाष्यस्य प्रदीपव्याख्यानकृता महावैयाकरणेन कैयटेन स्वग्रन्थमङ्गलाचरणपद्येषु भर्तृहरिप्रतिपादितव्याकरणशास्त्रसिद्धान्त एव पातञ्जलभाष्यतत्त्वावबोधे नदीसन्तरणे सेतुरिवैक आधार इति स्वीकृतम्-

तथापि हरिबद्धेन सारेण ग्रन्थ सेतुना ।

क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत् ॥ प्रदीपे मङ्गलाचरणे,

अतस्तेन सर्वत्र भाष्ये भर्तृहरिप्रणीतटीकां वाक्यपदीयमतं चादाय भाष्यविवेचनं सुव्यधायि । तेन शब्दाद्वैतवादिभिः भर्तृहर्यादिभिः प्रतिपादितो बौद्धार्थवादोऽपि व्याकरणमतमिति स्वीकृत्य महाभाष्यकारे प्रत्यारोपितः । परञ्च नायं बौद्धार्थवादो महाभाष्यकृदभिप्रेत इति साधयता भर्तृहरिहेलाराजप्रयुक्तबौद्धार्थसाधिकायुक्तय अपि मया पूर्वमेव प्रत्याख्याताः । तासां युक्तीनां कैयटप्रयुक्तत्वादपि पुनः समीक्षणं पिष्टपेषणमात्रमतो न वितन्यते । प्रदीपकारस्यावशिष्टयुक्तीनां बलाबलमग्रे निर्णीयते ।

''इह व्याकरणे शब्दार्थोऽर्थो न वस्त्वर्थः'' इति प्रकाशे (३/३/४९, ३/७/१०९) व्याख्यानं विदधता ''वस्तुपर्यायो ह्यर्थशब्दः'' (प्रकाशे ३/६/१) इत्यस्माद् वाक्याद्धेलाराजेन बाह्यार्थं बौद्धार्थञ्चोभयं भर्तृहरिसम्मतमिति प्रतिपादितम् । हेलाराजस्य व्याख्यानं भर्तृहरितात्पर्यस्य स्पष्टबोधकत्वान्न दुष्टमिति वक्तुं शक्यते । परञ्च कैयटेन यद् बौद्धार्थवादसाधकं भाष्यव्याख्यानं कृतम्, तेन तस्य दुष्टत्वं सुस्पष्टम् । टीकाकारस्य प्रयासो ग्रन्थग्रन्थिभेदनपुरस्सरं सरलया भाषया ग्रन्थकारतात्पर्यबोधनं भवति, न च स्वसिद्धान्तस्य स्थापना, अन्यथा रूपेण मूलग्रन्थोपरि भवति । मूलग्रन्थविरोधाद् यत्र यत्र प्रदीपेऽथवोद्द्योते दूषणमुपपन्नन्तेषां परिष्कारोऽत्र विचार्यते ।

## ३. महावैयाकरणकैयटस्योपचारसत्तायाः समर्थनम्

मतुप्सूत्रस्य 'न सत्तां पदार्थो व्यभिचरति' इति वाक्यमादाय भर्तृहरिणोपचारसत्ता कल्पिता । तन्मते सत्ता द्विविधा, तत्रोपचारसत्तायाः प्रत्याख्यानमस्माभिः पूर्वमेव कृतम् । भट्टकैयटेन पुनः महाभाष्यप्रदीपे बौद्धसत्ता स्वीकृता प्रतिपादिता च वैयाकरणसिद्धान्तरूपेण । अतः कैयटस्य मतं संस्थाप्य खण्डयिष्यते ।

महावैयाकरणः कैयटो भर्तृहरिहेलाराजप्रभृतिबौद्धार्थवादिनाम्मतस्य सारं प्रदीपे (५/२/९४) समासेनाकलयाञ्चकार –''अथास्तिग्रहणमिति संभवे व्यभिचारे च विशेषणविशेष्यभावो भविष्यति यथा नीलोत्पलमिति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तेरण पदोच्चारणसम्भवात्, तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः । सत्तायां प्रत्ययो यथा स्यादिति सत्तायां वर्तमानात् सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । न सत्तामिति =यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावस्तस्माद् बुद्धिसमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते । 'वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायते इति । अत्यन्ताऽसतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः, तस्माद् बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तृणां बहीरूपतयाऽवभासते । यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं

स्यात्, तदा वृक्षः, इत्यतः सत्तावगमाद् अस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्, नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाऽप्रसङ्गः। अङ्कुरो जायते इति च प्रयोगो न स्यात्, सतो जन्मविरोधात्। उपचारसत्तायां त्वेते दोषा नावतरन्ति। बुद्धिसत्तासमाविष्टस्य बहिः सत्त्वाऽसत्त्वजननप्रतिपादनायास्तिनास्तिजायत इति प्रयोगात्'' इति।

अतः कैयटानुसारमुपचारसत्ताकल्पनमावश्यकमिति समुपलभ्यते॥

## (अ) कैयटव्याख्यानं न भाष्यानुसारम्

इदमत्रावधेयम्। कैयटेन यद्भाष्यमत्र व्याख्यातं तत्तु स्वस्मिन्नपि सुस्पष्टम्। इदं भाष्यं बाह्यार्थमेव गोमत्त्वादेः विवरणं विदधार। गोमानासीत् गोमानस्ति, गोमान् भविता, इत्यादिना बाह्यार्थस्यैव ''धातुः सम्बन्धे प्रत्ययाः'' बाह्यार्थे सत्तात्रैविध्यं साधयति। नानेन भाष्येण कथमपि बौद्धार्थः सिध्यति।

परञ्चाप्यत्रत्य कैयटग्रन्थेऽपि बुद्धिविषयकृताया बाह्यासत्ताया विवरणं प्राप्यते। तथापि यत्रान्ते औपचारिकसत्तास्वीकारस्तु भर्तृहरिहेलाराजादिप्रवर्तितबौद्धार्थवादवासनावशीभूतबुद्ध्या कैयटस्य भ्रान्तिमात्रमेव। न भाष्याक्षरार्थव्याख्यानं तात्पर्यार्थविवरणं वा। अतः कैयटप्रतिपादितोपचारसत्तासमर्थकतर्काणामन्वेक्षणं कर्त्तव्यम्।

## ४. मतुप्सूत्रे कैयटसमर्थितयुक्तीनां प्रत्याख्यानम्

अत्रेदं वक्तव्यम्। पदार्थः सत्तां न व्यभिचरतीति नियमवाक्यस्यापव्याख्यानमेतत्। वस्तुतस्तु पदार्थः स्वनिष्ठस्वार्थ-(जाति)-त्वरूपेण यद्वा स्वनिरूपितजात्यावच्छिन्नद्रव्यरूपेण स्वसत्तां न व्यभिचरति, इयानेव व्युत्पत्तिलभ्यो निर्गलितोऽर्थो विवक्षितः। तदनु वृक्षोऽस्ति, वर्धते, इत्यादिप्रयोगाणां कालिकादिसम्बन्धेन वर्तमानकालिकास्तिवर्धतयादिक्रियाश्रयत्वकर्तृकारकरूपार्थकत्वसिद्धये तु वृक्षोऽस्ति वर्धत इत्यादयः प्रयोगाः सूपपद्यन्त एवेत्येतावतैव कैयटोक्तव्याख्यानं प्रत्याख्यातं भवति। अनेनैव नागेशादयोऽपि बौद्धार्थवादिनः परास्ता वेदितव्याः। एवमेव नास्तीत्यादिप्रयोगे दैशिकसम्बन्धे वृक्षादेः स्वार्थस्य विवक्षितदेशाधिकरणकवर्तमा-

नकालिकास्त्यादिक्रियाश्रयत्वरूपकर्तृकारकत्वार्थस्य निषेधाय नञ्घटितक्रिया-प्रयोगसम्भवे न कोऽपि दोषः । तस्मादुपचारसत्ता न समाश्रयणीया सुधीभिः । कैयटोक्तं नास्तीत्यस्य च 'सत्ताविरोधात् प्रयोगाप्रसङ्गः' इति न युक्तिसहम् ।

## (अ) महाभाष्यस्याशयः कैयटापव्याख्यानप्रत्याख्यानं च

एवञ्च भट्टनागेशेन ये तर्का बौद्धार्थसाधने प्रयुक्ताः, ते सर्वे कैयटव्याख्याने समुपलभ्यन्ते । अत्रेदमवगन्तव्यम् । पदार्थाः सत्त्वप्रधानाः सन्ति । अतः स्वसत्तया कदापि न वियुज्यन्ते । अत एव वार्तिककारेणास्तिभवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति, इत्यनेन यत्र क्रियापदं न श्रूयते तत्र 'अस्ति' इत्यस्याध्याहारः कथितः । तत्र कारणं हि काल एव पदार्थास्तिष्ठन्ति, यत्र यत्र पदार्थस्तत्र क्रियया सह पदार्थान्वयः । विना क्रियां पदार्था न तिष्ठन्ति, क्रियायां कालोऽन्वेति । अतः सत्यं क्रिययैव कालविभाजनम् । अतो पदार्थाः स्वसत्तां जहातु न समर्था इति सिद्धम् ।

अत्रेदमवधेयम् । शाब्दिकनये वस्तुतो वाक्यार्थे तिङन्तप-दावयवधातुवाच्यस्य व्यापारस्यैव मुख्यविशेष्यता । वाक्ये यदा कालविहितकृत्प्रत्ययान्तं पदं वर्तते, तेनाऽपि कालविहितविधानात् कालावबोधः स्यात् । किन्तु वयं पश्यामः, कृदन्तपदं द्रव्यवद्भवति, कालस्य तु साध्यायां क्रियायामन्वयः । अत एव तिङ्प्रत्ययैर्भूतभविष्यद्वर्तमानकालावबोधः सिद्धो न च कृदन्तैः । क्रियायां भावस्य प्राधान्यात् सत्तायाः गौणत्वाच्च । यद्येकस्मिन् वाक्ये कृदन्ततिङन्तपदयोः प्रयोगः स्यात् तर्हि तिङन्तवाच्यकाले कृदभिहितः कालो युज्यते । 'गोमान् आसीत्' इत्यत्र मतुप्प्रत्ययो वर्तमानकाले विहितः, तिङन्तप्रत्ययेन भूतकालः कथ्यते । अत्र शाब्दबोधे गोमत्सत्ताया भूतकालत्वं गम्यते, तथा च 'गोमान् भविता' इत्यत्र गोसम्बन्धस्यानागतसत्ता भासते । 'लतेयं पुष्पवत्यासीत्, लतेयं पुष्पवती भविष्यति' इत्यत्र तिङाभिहितो-ऽतीतानागतकालादेरन्वयस्तु लतानिष्ठपुष्पनिरूपितसम्बन्धसत्तायामेव, न लता-निष्ठसत्तायां न च पुष्पनिष्ठसत्तायाम् । उक्तं च भाष्यकृद्भिः -'का तर्हीय वाचो युक्तिः, गोमान् आसीत् गोमान् भवितेति ? एषैषा वाचो युक्तिः, नैषा गवां सत्ता कथ्यते । किं तर्हि ? गोमत्सत्तैषा कथ्यते' इति ।

अत्र विचारणीयं केय गोमत्सत्ता ? 'गोमान् आसीच्चैत्रः' इत्युक्ते न चैत्रस्य सम्प्रतिसत्ता बुध्यते, नापि तस्य गवाम्। तथा च नापि चैत्रस्य सम्प्रतिसत्ताऽभावः, नापि तस्य गवाम् । सम्भवति च चैत्रस्य सम्प्रतिसत्ता, गवां व्याधिना विनाशः । सम्भवति पुनः विपन्ने चैत्रे गोधनवियोगः, सन्ति चेदानीं ता गावो मैत्रस्य, या अतीते चैत्रस्य आसन्, तस्माच्-चैत्रो गोमान् आसीत्' इत्यत्र तिङाऽभिहितस्यातीतकालस्यान्वयो गोनिष्ठसत्त्वनिरूपितचैत्रनिष्ठस्वामित्वस्य सत्ताऽनुकूलव्यापारे । अतः सम्बन्धसत्तानुकूलव्यापार एव वाक्यार्थस्य मुख्यविशेष्यः । अनेन मार्गेणैव 'चैत्रो गोमान् भविता' इति प्रयोगस्योपपादनं कर्त्तव्यम् । अत्रेदमवधेयम्, महाभाष्यकृद्भिरत्र न मुख्यसत्तोपचरितसत्ताभेदः कृतः, नापि तैर्बौद्धार्थस्याश्रयः प्रार्थितः । सम्प्रतिभूतभविषयत्सत्तेति सत्तात्रैविध्याश्रयेण प्रक्रियानिर्वाहमार्गस्तैः प्रदर्शितः । कैयटेन पुनरुक्तं -''या तु मुख्या सत्ता सा भूतभविष्यत्सत्तेति व्यपदेष्टुं न शक्यते'' इति । अहो प्रदीपकारस्य व्याख्यानकौशलम् । अन्यत्र प्राप्तसिद्धान्तमन्यत्र पश्यति । भर्तृहरिसिद्धान्तं पञ्जलिमते पश्यति । अतो बौद्धार्थकल्पनं न शाब्दिकैर्वरेण्यम् ।

## (इ) अस्तिग्रहणेन सम्प्रतिसत्ताया बोधः

भाष्यकारेण सुस्पष्टमेवात्रोच्यतेऽस्तिग्रहणं सम्प्रतिसत्तार्थम् । अतोऽस्तिपदं वर्तमानकालं बोधयति, तथैव आसीत्पदं भूतकालं, भविष्यतिपदमनागतकालं बोधयत इत्येव भाष्याशयः । अतः सत्तायास्त्रैविध्यं भाष्यसम्मतं हेतुमति च सूत्रभाष्येऽपि ((५/२/९४) स्पष्टं , तथा चात्रापि । यथोक्तम्-''अस्त्यत्र वर्तमानकालोऽस्ति । कथं तर्हि भूतभविष्यत्सत्ता गम्यते ? धातुः सम्बन्धे प्रत्ययाः'' इति । अस्याग्निष्टोमयाजी पुत्रो भवितेत्यत्र सत्तायास्त्रैविध्ये स्वीकृते शङ्का भवति- यथा भूतकालो भविष्यत्कालेनाभिसम्बध्यमानो भविष्यत्कालः सम्पद्यते, तथैव कस्मान्न भविष्यत्कालो भूतकालेनाभिसम्बध्यमानो भूतकालः सम्पद्यते ? इति । अस्याःशङ्कायाः समाधाने भाष्यकारेणोच्यते -

''धातुसम्बन्धे प्रत्ययस्य यथाकालविधानात् । उपदस्य च कालान्यत्वम्'' इति वार्त्तिकद्वयेन महाभाष्ये (३/४/१) तत्समाधानं भवति ।

## (उ) सत्तायास्त्रैविध्यस्य भर्तृहरेरपि स्वीकरणम्

तथा च पदार्थो सत्तां न व्यभिचरतीति नियमस्याशयस्तु भूतो घट इत्यत्र कस्य भूतत्वम् ? वर्तमानो घट इत्यत्र कस्य वर्तमानत्वम् ? भावी घट इत्यत्र कस्य भावित्वम् ? इत्यत्र न घटस्य भूतत्वं वर्तमानत्वं वा भावित्वं, तस्य द्रव्यात्मकत्वात् कालेनासंस्पर्शात् । क्रियायां साध्यस्वभावानामपि करणभूतेन कालेन सम्बन्धात् । अतोऽत्र धातुवाच्या तु सत्ताख्या क्रिया भूतत्वं वर्तमानत्वं भावित्वञ्च बोधयति, यथा कालप्रत्ययविधानात्, न च घटः पदार्थः । सत्तां न पदार्थो व्यभिचरति, इत्यस्यायमेवाशयो भर्तृहरिणाऽपि स्वीक्रियते-

भूतो घट इतीयञ्च सत्ताया एव भूतता ।
भूता सत्तेति सत्तायाः सत्ता भूताऽभिधीयते ॥ वाक्यपदीयं कालसमुद्देशः ७९

यदि च पदार्थो सत्तां व्यभिचरति, तर्हि व्यवस्थेयमसिद्धा स्यात् । अत एव भाष्यकारेण सुष्टु प्रतिपादितम् । अत्र भर्तृहरिणाऽपि तत्सत्तायास्त्रैविध्यं स्वीकृतमेवेति निश्चीयते । अतो वैयाकरणमतेनोपचारसत्तासाधनं न केनाऽपि प्रकारेण स्वीकर्त्तव्यं, बौद्धमतेन वाऽद्वैतमतेन तत्तच्छास्त्रेषु भवतु, तत्र नास्माकं विप्रतिपत्तिः ।

## (ऋ) न्यासकारस्यानभिप्रेतोपचारसत्ता

न्यासकारेणापि बौद्धार्थस्वीकृतिं विनैव भाष्यस्य न सत्तां पदार्थो व्यभिचरतीति ग्रन्थो व्याख्यातः । तस्मादुपचारसत्ता स्वीकारो न प्राचीन-वैयाकरणानामभिप्रेत इति सिध्यति । अतोऽस्मत्समर्थने न्यासः (५/२/९४) प्रमाणत्वेन प्रस्तूयते- "न सत्तां पदार्थो व्यभिचरति, इति तस्या व्यवच्छेद्याभावादपार्थकमिदं विशेषणम् ? नैतदस्ति, विशेषणोपादानसामर्थ्यादेव विशिष्टैव सत्ता विशेषणत्वेनोपात्ता, न सत्तामात्रमिति प्रतीयते । सा पुनर्विशिष्टसत्ता सम्प्रतिसत्तैव । अस्ति च तस्या व्यभिचार इति प्रसज्यत एव विशेष्यविशेषणभावः । किं पुनः सम्प्रतिसत्ता विशेषणत्वेनोपात्ता ? तस्यामेव प्रत्ययो यथा स्यात्, भूतभविष्यत्सत्तायां मा भूदित्येवमर्थम् । तेन गावोऽस्यासन् गावोऽस्य भवितार इत्यत्र न भवति" इति । न च केवलमत्र, अपि तु सर्वत्र

न्यासकार उपचारसत्तामस्वीकृत्य व्याख्यानञ्चक्रे । एवमेव भट्टोजिदीक्षित-कौण्डभट्टाभ्यामपि बौद्धार्थो न स्वीकृतः परमतत्वात् ।

### ५. वृक्षाणां विंशतिरित्यत्र षष्ठीप्रयोगो बौद्धार्थदृष्ट्या

कैयटेन 'पङ्क्तिविंशति' इति सूत्रभाष्यव्याख्यानावसरे प्रदीपे (५/१/५९) वृक्षाणां विंशतिः, इत्यत्र षष्ठीप्रयोगोपपत्त्यर्थं बौद्धार्थं साधयता प्रत्यपादि-''ननु द्रव्यसङ्घे इह द्रव्याणां द्रव्यसङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं बुद्ध्या परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थकारा-मुपजनयन्तः सत्यपि वास्तवभेदेऽभेदमवगमयन्ति'' इति । तथा च तत्रोद्द्योते (५/१/५९) नागेशोऽप्याह- ''बुद्धिव्यवस्थापितेत्यादिबुद्धिपरिकल्पितार्थाभिधायिन एव शब्दा न बाह्यार्थाभिधायिनः'' 'इति । अतो बुद्धिपरिकल्पित एवार्थ इति सिध्यति ।

### (अ) अत्र महाभाष्यमतेन न बौद्धार्थः साधनीयः

वृक्षाः वनमित्यत्र प्रत्येकं वृक्षाणां विभागोऽपि भूतले बाह्यसिद्धये सर्वेषाञ्च दैशिकसम्बन्धेन समूहोऽपि बाह्यार्थरूपतयैव सिद्धः, समूहविवक्षायां वनमिति उच्यते, भेदविवक्षायां तु वृक्षा इति । बाह्यपदार्थस्योभयथा सिद्धत्वे तस्य बुद्ध्या समूहात्मकत्वं प्रत्येकं भिन्नत्वं वा परिकल्पनमनुचितम् । प्रत्युत भेदविवक्षायां तु बहुत्वं समूहविवक्षायामेकवचनम् । एवमेव वृक्षाणां विंशतिरित्यत्रापि'' विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः'' इति नियमेनैकवचनम्, न तु बौद्धार्थसिद्धौ प्रमाणम् । एवमेव दश वृक्षाः, वृक्षाणां दशत्, इत्यत्रापि बाह्यपदार्थानां 'वृक्षाणां दशत्' इत्युच्यते, अविवक्षायां तु दश वृक्षा इति, नात्र बौद्धार्थकल्पनाप्रसङ्गः । अत एव भाष्यकाराः प्रोचुः- ''विंशत्यादिषु चाप्येको गुणः स प्राधान्येन विवक्षितस्तस्यैकत्वादेकवचनं भविष्यति'' (५/१/५९) । एवमेव तत्रानेकैरुदाहरणैः स्पष्टीचक्रिरे विवक्षानियमं यथा– ''असिभिर्युद्धम् । न चासयो युध्यन्ते, असिगुणाः पुरुषाः युध्यन्ते, गुणस्तु खलु प्राधान्येन विवक्षितो भवति । इह तावद् गावो धनम्, इति धिनोतेर्धनम् । एको गुणः स च प्राधान्येन विवक्षितः'' (५/१/५९) । अतो बौद्धार्थवादिकैयटनागेशयोरपव्याख्यानन्न पतञ्जलिभाष्यानुसारमिति सिद्धम् ।

## ६. कंसं घातयतीत्यत्र वर्तमानकालता बौद्धार्थेनैव

हेतुमति चेति सूत्रस्य भाष्यमवतारयद्भ्यां कैयटनागेशाभ्यां बौद्धार्थः साधितः । तत्र तु कथकैः श्रोतरि कंसाद्याकारप्रत्ययजननाद् बुद्धिवासुदेवेन कंसं घातयतीति प्रयोजकत्वोपपत्तिः प्रदर्शिता । अत्र भाष्यतात्पर्येण बौद्धार्थो न सिध्यति । अतो बौद्धार्थवादिनागेशादीनां मतं परीक्ष्यते ।

### (अ) महाभाष्यकारभर्तृहरिभ्यां नात्रोपचारसत्ता स्वीकृता

हेतुमति चेति सूत्रभाष्ये 'चिरहते कंसे चिरबद्धे च बलौ, कंसं घातयति बलिं बन्धयति' इत्यत्र कथं वर्तमानकालतेति प्रश्ने, ये तावदेते शौभिका नाम एते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्ति, इत्युत्तरम् । यदि शौभिककर्त्तृकं कंसवधं बलिबन्धनं च वर्तमानकालिकमादाय युज्यते वर्तमानकालतेति, वर्तमानक्रियाप्रयोगः साधितः । न चात्र बौद्धार्थकल्पनालेशोऽपि । एवमेव ग्रन्थकेष्वपि शब्दग्रन्थनमात्रं लक्ष्यते । यतो हि वक्तारः कंसादीनामुत्पत्त्याप्रभृत्याविनाशात् तदृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति । येषामर्थानां प्राचीना बाह्यसत्ता नाधुना, तानप्यर्थान् ग्रन्थेषु बुद्धिविषयीकृतान् वर्तमानकाले प्रकाशयन्ति, इत्यत्रापि वर्तमानकालता युज्यते । न च कोऽपि वर्तमानकालिकप्रयोगे दोषः, न चात्र बौद्धार्थकल्पनेत्येव भाष्याशयः । इतोऽपि कस्यापि पदार्थस्य बाह्यस्यैव चिरविनष्टस्यापि वर्तमानकाले वर्तमानकालिकक्रियाप्रयोगेण कथनं सङ्गच्छत इति लोकव्यवहारः । लोकव्यवहारे चिरविनष्टोऽपि बाह्यार्थो वर्तमानकालिकक्रियाप्रयोगेण प्रतिपाद्यमानो दृश्यते । यथा गच्छ हनिष्यते कंसः, किं गतेन हतः कंसः, इति लौकिकप्रयोगाश्चिरविनष्टस्य बाह्यार्थस्य प्रतिपादने दृश्यन्ते । अतः कंसं घातयतीत्यत्र वर्तमानकालिकः प्रयोगः शास्त्रसिद्धः लोकसिद्धश्चेति भाष्यकृतामाशयः ।

बौद्धार्थोऽभीष्टश्चेद् बौद्धार्थरूपं कंसमीदानीमपि वर्तमानं घातयति, इति वर्तमानकालता युज्यत इत्येवं वदेत् । किमेतावता भाष्यग्रन्थेन । अतो बौद्धार्थो न भाष्यसम्मतः प्रत्युत एतद् भगवन्नागेशनाटकमात्रन्न तु शास्त्रतात्पर्यभूतम् ।

भर्तृहरिणाऽपि नानेन भाष्येणोपचारसत्ता समर्थिता, अपि तु स्पष्टतया विषयसत्तयैव निर्वाहः प्रदर्शितः । यथोक्तम्-

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥ वाक्यपदीयं साधनसमुद्देशः ५,

अत्र सुस्पष्टम्, बुद्धिविषयतया निर्वाहः। परञ्चात्र हेलाराजव्याख्यानमपि दुष्टम् -"चिरकालातीतत्वात् कंसादीनां बहिरसत्त्वाद् बुद्धिगोचरतया सतो विद्यमानान् प्रकाशयन्ति। शब्देनावभासयन्ति। बुद्धिप्रतिभास्येव ह्याकारः शब्दार्थो न वस्त्वर्थः। तथा च कथकः श्रोतरि कंसाद्याकारप्रत्ययजननाद् बुद्धिवासुदेवेन बुद्धिकंसं घातयतीति प्रयोजकत्वसमारोपात् प्रयोगोपपत्तिः" इति (प्रकाशे साधनसमुद्देशे ५)।

अत्रेदं स्पष्टं हेलाराजस्य व्याख्यानं न भर्तृहरिकारिकानुगुणं भजते। प्रत्युत बौद्धनयानुकूलमेव, बौद्धा अपि बाह्यार्थं नाङ्गीकुर्वन्ति। परञ्च महाभाष्यकारेणात्र त्रिविधा सत्ता प्रतिपादिता, सैव लोकानुमोदिता भूतसत्ता भविष्यत्सत्ता सम्प्रतिसत्ता च। क्रिययैव कालावबोधः सम्पद्यते। कालो यथा त्रिविधस्तथैव कालभेदेन सत्ताऽपि त्रिविधा। तथा च कालः क्रिययैव बुध्यते। क्रियां विना न कालावबोधः। यथोक्तं भाष्ये- "नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः व्यज्यन्ते। अस्त्यादिभिश्चापि भूतभविष्यद्वर्तमानकालाः व्यज्यन्ते" इति (१/३/१ वा. १२)। अतो भाष्यकृतामभीष्टा सत्ता त्रिविधा। त्रिविधात्मकया सत्तया लोकव्यवहारो वाग्व्यवहारश्च प्रवर्तते। अतस्तत्रैवाह-"त्रैकाल्यं खल्वपि लोके लक्ष्यते। गच्छ हनिष्यते कंसः, गच्छ हन्यते कंसः, किं गतेन हतः कंसः, इति।

अत्र प्रथमवाक्ये नाटकस्थकंसवधात्मकव्यापारस्य भविष्यत्सत्तामुद्दिश्य प्रयोगः वक्त्रा कृतः। एवमेव द्वितीयेऽपि नाटकस्थकंसहननात्मकव्यापारस्य सम्प्रतिसत्तामाधारीकृत्य वक्त्रा वर्तमानकालस्य प्रयोगः कृतः। तृतीये तु भूतसत्तामुद्दिश्य वक्त्रा भूतकालिकक्रियाप्रयोगः कृतः। अत्र विवक्षयैव प्रयोगः। एकस्यैव कंसहननात्मकव्यापारस्य वक्तृप्रत्यक्षमादाय त्रैकालिकविषयता सिद्धा। प्रत्यक्षे तु बाह्यपदार्थस्य सत्तावश्यकी, परन्तु शाब्दबोधे नित्यया सत्तया व्यवहारः प्रवर्तते। यथा कूपे प्रत्यक्षीकृते कूपस्य शाब्दबोधे कोऽर्थ इति ज्ञायते एव प्रत्यक्षकर्त्रा। स प्रत्यक्षकर्त्ता परं बोधयितुं वदति- 'अस्मिन्मार्गे यदि त्वं यास्यसि तर्हि क्रोशयुगे कूपो भविष्यति, तेनैव तव पिपासानिवृत्तिर्भविष्यति'। अत्र प्रश्नः समुत्थितः, वर्तमानेऽपि कूपे कथं भविष्यत्कालप्रयोगः ? अस्याः शङ्कायाः समाधानन्न बौद्धार्थेन भवति। अत्रापि

भाष्यकारेण त्रिकालप्रयोगस्य सिद्धिर्लोकव्यवहारानुसारिणी प्रदर्शिता । यथोक्तम् -''नहीह कश्चित् कूपोऽस्तीति वक्तव्ये कूपोऽभूदिति प्रयुङ्क्ते । किं पुनः कारणम् ? न वा भाष्यन्ते असिद्धश्च विपर्यासः । इह किञ्चिदिन्द्रिय कर्म । किञ्चिद् बुद्धिकर्म । इन्द्रियकर्म समासादनम् । बुद्धिकर्म व्यवसायः । एवं हि कश्चित् पाटलिपुत्रं जिगमिषुराह- योऽयमध्वागन्तव्य आपाटलिपुत्रादेतस्मिन्कूपो भविष्यति, अनद्यतने कूपो भवितेति । समासाद्य कूपोऽस्तीति । समासाद्यातिक्रम्योषित्वा विस्मृत्य कूपो बभूव । तद्यदेन्द्रियकर्म तदैता विभक्तयो, यदा तु बुद्धिकर्म तदा वर्तमाना भविष्यति'' 'इति (३/३/१३३) । अस्य सिद्धान्तभाष्यस्य तात्पर्यं सम्यग् जानन्नुपचार-सत्तासंस्थापको भर्तृहरिः स्वयमेव सत्तात्रैविध्यं स्वीकृत्य व्यवहारोपपत्तिं व्याचष्टे–

सतामिन्द्रियसम्बन्धात् सैव सत्ता विशिष्यते।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ वाक्यपदीयं कालसमुद्देशः १११,

अस्यार्थः- सतां घटादीनां यया ते सन्तः सैव सत्ता इन्द्रियसम्बन्धाद् विशिष्यते, भूतभविष्यद्वर्तमानकालभेदेन भिद्यते । इन्द्रियसम्बन्धस्य वर्तमानत्वे वर्तमाना सत्ता, तस्य भूतत्वे भूतसत्ता तस्य भविष्यत्त्वे तु भविष्यन्ती सत्ता इति । हि= यतः, एकस्य भेदेन व्यवहारः सर्वोऽपि वस्त्वन्तरनिबन्धनः, वस्त्वन्तररूपोपाधिपरिच्छेदकृत इति । इह पदार्थः सर्वो व्यवहारो विवक्षानिबन्धनः । एवञ्च त्रिकालविषयाः प्रयोगाः सामान्यविशेषभूता अपि सिद्धाः । विप्रकृष्टे हीन्द्रियसम्बन्धेऽतीते भूतबोधका लुङादयः, विप्रकृष्टे चागामिनि भविष्यद्विशेषविषया लुडादयः । अतो लोकसिद्धस्त्रैकालिकप्रयोग इन्द्रियसम्बन्धाद् इति सिद्धे, बौद्धार्थकल्पनस्य प्रत्याख्यानमपि भवति । अतो भाष्याशयविरुद्धबौद्धार्थमतमिति सिद्धम् । यथा लोके पदार्थानां कालभेदेन त्रिविधा सत्ता, तथैव शाब्दिकाः स्वीकुर्युः ।

## ७. प्रकृतिविकृतिभावोऽपि बौद्धार्थेनैवोपपन्नस्तत्समीक्षा च

स्थानिवत्सूत्रभाष्यमादाय नागेशेन वैयाकरणसिद्धान्तलघुमञ्जूषायां शक्त्याश्रये (पृ. १६०) बौद्धार्थस्वीकारार्थमेको हेतुः प्रस्तुतः ''प्रकृतिविकृति भावोप्यन्तःकरणस्येकारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इति स्थानिवत्सूत्रभाष्ये स्पष्टम्'' इति । तत्रैव रत्नप्रभायां (पृ. १६२)-''सत्कार्यवादे

यथा कार्यकारणयोरभेदाद् बुद्धिस्थत्वेन प्रकृतित्वं बाह्यरूपेण विकृतित्वं तथात्रापि'' इति तट्टीकाकाराः समापतिशर्ममहोदयाः ।

परञ्चात्र भट्टोजिदीक्षितेन बौद्धार्थो नाङ्गीकृतः । तेन ज्ञानस्य विषये (बाह्यार्थे) आरोप इति शब्दकौस्तुभे (पृ. २६२) प्रतिपादितः- ''कार्यमिदं ज्ञानं योग्यताबलात् । तथा च ज्ञाननिष्ठमुत्पादविनाशादिकं विषये आरोप्यते'' इति भावः । एवमेव कैयटोऽपि सुस्पष्टं प्रदीपे (१/१/ ५६) निरूपयामास''-बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते न तु तद्वशाद् अर्थानां तत्रावस्थानम्'' इति । अत्रेदं वक्तव्यम् । इह बाह्यपदार्थानामाम्रन्यग्रोधादीन् विषयीकृत्य बुद्धिपरिणाम उच्यते । बौद्धाश्चेद् आमन्यग्रोधादयस्तर्हि बुद्धिः कथं विपरिणमति । पदार्थस्य च बुद्धिसिद्धत्वाद् बुद्धिपरिणामो न घटते । अतो नित्यानामेवाम्रन्यग्रोधादीनां बाह्यार्थानां विषयतया बुद्धिपरिणामोऽत्र विवक्षितः । नानेन ग्रन्थेन शब्दार्थस्य बौद्धत्वं सिध्यति ।

## ८. भाविनीसंज्ञया बौद्धार्थसिद्धिस्तत्समीक्षा च

महाभाष्यकारेण इग्यणः सम्प्रसारणमिति (१/१/४५) सूत्रव्याख्यानावसरे 'भाविनी संज्ञा' विवेचिता, अनया बौद्धार्थः सिध्यति । अत्रेदम्मन्तव्यम्- ''तन्तुवायः शाटकपदार्थं बुद्धिस्थं (बुद्धौ सूक्ष्मसंस्काररूपेणावस्थितम्) स्मृत्वा बाह्यां शाटकं तुरीवेमादिसाहाय्येन सूत्रजातेन निर्माति । यदि तस्य बुद्धौ शाटकपदार्थः पूर्वत एव सूक्ष्मसंस्कारविषयतया नासीत् । तर्हि कथं स सूत्रं गृहीत्वा शाटकं निर्मातुं प्रयतेत । यतो हि कोऽपि प्रेक्षाकारी कञ्चन पदार्थं यदा जानाति, तदेव तद्विषयणीमिच्छां विदधाति, तत एव यतते, तत एव प्रवर्तते, इत्यादिकार्यकारणभावो राद्धान्त इति'' विवेचयति कश्चन स्वशोधग्रन्थे (योगतन्त्रव्याकरणशास्त्रदृष्ट्या बौद्धार्थविमर्शे पृ. २६२) । इदमत्रावधेयम् । महाभाष्यकृतामाशयः- इतरेतराश्रयाणि कार्याणि न प्रकल्पन्ते, इति लोकसिद्धो न्यायः । किञ्च शास्त्रे क्वचिदितरेतराश्रयाणि प्रकल्पन्ते, क्व ? यत्रान्यतरस्य बहिस्सत्तायां ज्ञातायामन्योऽन्याश्रयाणि प्रकल्पन्त एव । यथात्र 'अस्य सूत्रस्य शाटकं वय' इत्युक्ते शाटकश्चेन्न वातव्यः, वातव्यश्चेन्- न शाटक इत्यन्योन्याश्रयेऽपि बाह्यसत्तायां शाटकपदार्थसूत्रजन्य इत्येव बुद्धिविषयीकृत्य तन्तुवायः सूत्रस्यैव वयनकर्मणा भाविनीसंज्ञां विरचयति । एवमेव इग्यणः

सम्प्रसारणमित्यत्रापि इग्यणोः ज्ञानेऽन्योऽन्याश्रये आपतिते भाविनीं सम्प्रसारणसंज्ञामिक्पदार्थत्वेन ज्ञातां बुध्यति बोद्धा, इत्येव बाह्यपदार्थ ज्ञानाश्रयणेनाऽन्योन्याश्रयदोषपरिहारप्रक्रिया भाष्ये प्रदर्शिताऽस्ति । नानेन भाष्यकृतां बौद्धार्थो विवक्षितः, कथमपि न सिध्यति । यथा सूत्रस्यैव बाह्यसत्ता सिद्धा, शाटिका भाविनीसंज्ञात्वेनोच्यते । अतो बौद्धार्थो महाभाष्यकृतामभीष्ट इति न सिद्धम् ।

## ९. भ्रमे बहिर्देशेऽसत एव भानमिति नागेशमतं तत्खण्डनञ्च

भट्टनागेशेन स्त्रियामिति (४/१/३) सूत्रस्थभाष्यग्रन्थेन बौद्धार्थो भाष्यकृदभिमत इति, उद्द्योते मञ्जूषायाञ्च भर्तृहरिकारिकाप्रमाणेन साधितम्। तत्र मृगतृष्णागन्धर्वनगरादिप्रतीत्या भ्रमे बहिर्देशेऽसत एव भानमुक्तम् । अतो नागेशोक्तप्रकारेण सर्वत्र बौद्धस्य बहिर्भानमिति निर्णयो बौद्धार्थवादिना संस्थाप्यते । तत्र नैयायिकमतेन सर्वत्र सत एव भानमित्यनेन विरोधः स्पष्ट एव । उषरभूमावूर्ध्वाधरभावेन सूर्यकिरणानां सम्बन्ध एव मृगतृष्णा । अधिष्ठानभूतायां तस्यामसदप्युदकं वासनावशाद् भासते । एवमेवासदपि रजतं शुक्त्यादाववभासते । अतो ब्रह्मणि निखिलं जगदसदपि पूर्वपूर्ववासनावशाद् भासते । मिथ्यात्वे विप्रतिपन्नं प्रति विश्वासदार्ढ्याय बहवो दृष्टान्ताः सन्तीति नागेशाशयः ।

अत्रेदं वक्तव्यम् । नागेशयुक्तिसमालोचने भाष्यमेवादौ द्रष्टव्यमस्ति । उदाह्रियते महाभाष्यम् (४/१/३)- ''असत्तु मृगतृष्णावत्, असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसन्नाम लिङ्गं शक्यं द्रष्टुम् ? मृगतृष्णावत् तद्यथा -मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति । 'गन्धर्वनगरं यथा' । यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते, तद्वत्खट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम् ''।

जातिर्द्रव्यं लिङ्गञ्च नामार्थाः । किञ्चात्र बाह्यार्थयोः खट्वावृक्षयोः जातिव्यक्तिरूपोऽर्थ उभयतः प्रत्येकं पदार्थे दृश्यते । किञ्च खट्वायां स्त्रीत्वमेव बाह्यार्थपक्षे पुंस्त्वञ्चापि न प्रत्यक्षीक्रियते, अप्रत्यक्षत्वाद्, असद्भूतं स्त्रीत्वादिलिङ्गं द्रष्टुं न शक्यम् । अतो लिङ्गं नार्थः, असत्त्वात् । दृश्यते बाह्यार्थभूतयोः खट्वावृक्षयोः प्रत्येकं जाति व्यक्तिरूपोऽर्थः । अतः शब्देषु

वाच्यार्थेषु बाह्येषु लिङ्गरूपोऽर्थो नास्त्येवेति शङ्काभाष्याशयः। अतोऽत्रैवोक्तशङ्कासमाधानपरं -'मृगतृष्णावत्' इति वार्त्तिकं दृश्यते । यथा- "मृगास्तृषिता अपां धाराः पश्यन्ति न च ताः सन्ति, गन्धर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते" । तथैव बाह्ये शब्देऽर्थे च खट्वावृक्षयोरसदपि लिङ्गं द्रष्टव्यमिति तद्विवरणम् । शङ्काभाष्यानुसारेण लिङ्गरूपपदार्थस्य वस्तुतोऽसत्वे स्वीकृतेऽपि अर्थवत्त्वं स्वीकर्तव्यम्, यथा मृगतृष्णायामपां धाराणामसतीनामपि मृगकर्तृकं दर्शनम् । तथा चेन्द्रियदोषाद्दूरतो दृश्यमानानि गन्धर्वनगराण्यपि उपसृत्य सामीप्यं प्राप्य नोपलभ्यन्ते । किञ्च, दूरस्थो द्रष्टाऽसतामपि गन्धर्वनगराणां दर्शनं स्वीकरोति । तद्वद्बाह्यार्थयोः खट्वावृक्षयोः स्थितिलिङ्गदिरूपार्थस्यासतोऽपि सत्त्वस्वीकार इव, बाह्यशब्देषु बाह्यार्थेष्वप्यसन्नपि लिङ्गरूपोऽर्थः स्वीकर्त्तव्य इति एकदेशिभाष्यतात्पर्यम् । किञ्चात्रेन्द्रियवैकल्याददतिदूरात् प्रत्यक्षप्रमाणदोषादेवासदर्थस्याऽप्यस्ति स्वीकारोऽप्रमाणिकः । अप्रामाणिकत्वादेव लिङ्गरूपोऽर्थ एवाऽप्रामाणिकः सिध्यति, यथा मृगतृष्णा गन्धर्वनगराणि चाप्रमाणिकानि । इत्यादीनि यावन्ति एकदेशिवार्त्तिकानि भाष्ये प्रोक्तानि तानि सर्वाणि बाह्यार्थमेवोक्त्वा बाह्ययोः खट्वावृक्षशब्दार्थयोर्लिङ्गमप्यर्थ इत्येवामाशयकानि सन्ति । न तत्र बौद्धशब्दार्थयोश्चर्चाऽपि श्रूयते । अतः कथमनेन भाष्येण शब्दार्थयोर्बौद्धत्वं सिसाधयिषन्ति बौद्धार्थवादिनः इति प्रष्टव्यास्ते । वस्तुतस्तु, अस्मिन् भाष्ये तन्मतगन्धलेशोऽपि नानुभूयते । तथा च नागेशेन हरिकारिकाऽन्यथा व्याख्याता । भर्तृहरिणाऽपि नानेन प्रसङ्गेनोपचारसत्ता समर्थिता, अतो नागेशभट्टस्य व्याख्यानं दुष्टमित्यत्र न सन्देहावसरः ।

## १०. भट्टोजिदीक्षितकौण्डभट्टाभ्यामुपचारसत्ताऽस्वीकृता

शाब्दिकां निकाये दर्शनविषये वाक्यपदीयं विहाय न कोऽपि ग्रन्थः शब्दकौस्तुभः सदृशः पूर्वमासीत् । शब्दशास्त्रज्ञानाभिशालिनां तत्रभवतां भवतां वैयाकरणानां हृदयोद्वेगकारिर्णीं शब्दशास्त्रविहारिर्णीं तद्विषयर्णीं न्यूनतामसहमानैः सर्वशास्त्रनिष्णातान्तःकरणैर्भट्टोजिदीक्षितैः शब्दकौस्तुभः कौस्तुभ इव वैयाकरणसिद्धान्तप्रकाशकोऽतिविस्तृतो ग्रन्थो निरमायि । तस्मिन्ग्रन्थरत्ने वैयाकरणानां निर्वाहोपयोगितत्त्वानि विवेचितानि, येषां तत्त्वानां शास्त्रव्यवहारे नोपयोगस्तेषामेव चर्चा तत्र नोपलभ्यते । भट्टोजिदीक्षितानां

कस्मिन्नपि ग्रन्थे बौद्धार्थो न चर्चितः, अपि तु सुस्पष्टं भर्तृहरिप्रतिपादितविवर्तवादादिसिद्धान्ताः व्याकरणतन्त्रेऽनुपयुक्ता इत्युक्त्वा तिरस्कृता निराकृताश्च । यथा शब्दकौस्तुभे विलिलिखुः- "प्रसङ्गादद्वैते औपनिषदे ब्रह्मण्यपि व्युत्पद्यानामित्यभिप्रायेण भगवान् भर्तृहरिः विवर्त्तवादादिकमपि प्रसङ्गाद् व्युत्पादयत् । तत्तु तत्रान्तरे स्फुटम्, प्रकृतेनातीवोपयुक्तं चेति नेह तन्यते" इति (पृ. १२)।

एवमेव कौण्डभट्टेनापि बृहद्भूषणे सारे च न कुत्रापि बौद्धार्थः प्रतिपाद्यतेऽस्वीकरणात् । अनुपदमेव तद्विवेचनं प्रस्तूयते ।

## ११. शशशृङ्गादिपदानां शिष्टप्रयुक्तत्वात्प्रातिपादिकत्वसिद्धिः

बृहद्वैयाकरणभूषणे ग्रन्थे बौद्धार्थो न कुत्रापि साधितः । यत्र वाक्यपदीयकारेणौपचारिकसत्तया व्यवहारोपपत्तिः कृता, तत्र कौण्डभट्टेन बोधस्तु, शब्दार्थाद् भिन्नं ज्ञानम्, इति स्वीकृतम् । तेन ज्ञानेन सर्वत्र व्यवहारसिद्धिर्भवत्येव । ये केचन बाधनिश्चयाद् अर्थबोधो नेति वदन्ति तेषाम्मतं श्रीहर्षस्य "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति खण्डनखण्डखाद्योक्तमतेन प्रत्याख्यातम् । बृहद्वैयाकरणभूषणे धात्वर्थनिर्णये (पृ. ४८) प्रतिपादयामास-"अत एव शशशृङ्गादिशब्दाद्बाधितोऽपि संसर्गो भासत एव, इत्यर्थप्रतीतिजनकत्वरूपार्थवत्त्वात् प्रातिपदिकत्वसिद्धेः समासग्रहणं नियमार्थम्, इत्यत्र नानुपपत्तिः । इत्थं च क्रियावाचकत्वं तद्बोधकत्वमात्रं वक्ष्यते च बोधकत्वमेव शक्तिरपि" इति ।

नैयायिकमीमांसका योग्यतां शाब्दबोधे कारणं स्वीकुर्वन्ति । योग्यताविरहाच्छाब्दबोधो न भवति । तत्र तु पदार्थोपस्थितिमात्रमेव, तथा च अत्यन्तसता इन्द्रियसन्निकर्षाभावेन प्रत्यक्षासम्भवाद् व्याप्तिज्ञानासम्भवेन अनुमित्याद्यभावात्तत्र ग्रहस्यैव अभावान्न बोधः, इति न्यायमीमांसासिद्धान्तः । अत एव-

'अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः सङ्ख्यया ।
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदराद् ।
मूकानां प्रवरेण कुर्मरमणीदुग्धोदधे रोधसि ।। नैषधीयचरितम् १२/१०६,

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।

मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ।। इत्यादौ च न बोध इति । अत्र वैयाकरणमतन्तु -"अत्र बाधनिश्चयादेः सत्त्वेपि बोधदर्शनेन अस्य अप्रतिबन्धकत्वात् । न च अत्र न शाब्दबोधः, किन्तु पदार्थोपस्थितिमात्रम् इति शङ्क्यम् । अन्यत्रापि तथात्वापत्तेः शब्दप्रामाण्योच्छेदप्रसङ्गाद्, अन्यथा चमत्कारानापत्तेश्च । न च प्रवृत्तिं प्रतिविशिष्टज्ञानस्य हेतुत्वानुरोधाच्छ-ब्दविशिष्टज्ञानसिद्धिः, दुःखद्वेषेच्छासुखादावपि तद्रीत्या तद्धेतुत्वेन मिथ्याभिशापगालिदानरूपकादिकाव्यजदुःखाद्यनुरोधेन सत्यपि बाधे तत्सिद्धेर्दुवारत्वात् । अत एव शक्तिग्रहोऽपि न शाब्दबोधविषयीभूत-पदार्थमात्रेऽपेक्षितः, किन्तु क्वचिच्छक्यताऽवच्छेदकावच्छिन्ने, स च प्रकृते 'घटोऽस्ति' इत्यादौ वृत्त एव । शशशृङ्गादिपदे तु पदप्रकारकबोध एव । तत्र च इदं पदं क्वचिच्छक्तम्, साधुपदत्वाद् इत्याकारो दशरथादिपदेषु इव तद्ग्रहो हेतुः, स च शब्दानुपस्थितावपि भवति" इति कौण्डभट्टेन बृहद्वैयाकरणभूषणे धात्वर्थनिर्णये (पृ.४९-५०) प्रोक्तम् । बौद्धार्थविवेचनाभावेऽनेन सिद्धान्तेन न ह्युपचारसत्ता सिद्धा, अपि च ज्ञानेन बोधेन वाऽलीकार्थकमिथ्यार्थकानां प्रयोगः साधुतां गच्छतीति कौण्डभट्टेन सम्यक् साधितम् ।

कौण्डभट्टस्तु भर्तृहरिमतं न सर्वत्र स्वीचकारेति गम्यते । अनेनाचार्येण वैयाकरणप्रतिपक्षिनैयायिकमीमांसकैः सह शास्त्रार्थः बहुधाकारि । अत एवानेन युक्तिविरुद्धम्मतम् (बौद्धसत्तावादं) अद्वैतसम्मतं व्याकरणे न प्रमाणितं, तत्तु युक्तमेव प्रतिभाति ।

"आत्मानमात्मना विभ्रत." इत्यादितो भर्तृहरिप्रयुक्तबौद्धार्थसाधकयुक्तिः महाभाष्यप्रामाण्येन खण्डिता बृहद्भूषणे, सा तु तृतीये भर्तृहरिसमीक्षाध्याये नियोजिता, अतः पिष्टपेषणभयान्न पुनरुल्लिख्यते । स्थलविशेषे षोढाऽपि प्रातिपदिकार्थो ग्रन्थे स्वीकृतः । यथा-

शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।

नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ।।

तदेव नामार्थनिर्णये २६ (पृ. १३५)

इत्यत्रानुकरणेऽर्थोच्चारणासम्भवेन विना शब्दविषयं शाब्दबोधासङ्गतिः, अतोऽत्रापि वृत्तिर्वाच्या । "शक्त्यभावेन लक्षणाविरहाद् अनुपस्थितेश्चेति शक्तिरेव वाच्या । एवं च शब्दोऽपि यदि अनुकार्यानुकरणयोर्भेदेन विवक्षा तदा तथा इति । अनुकार्यः प्रातिपदिकशक्य इत्यर्थः । नो चेद् भेदविवक्षा तदा सिद्ध उपस्थितोऽर्थवद् भासते । अर्थो यथा शाब्दबोधे भासते, तथा शब्दोऽपि शाब्दबोधे भासते इति ।

## १२. नलरामादिपदानां सादृश्याद्युपायेनार्थबोधः

"ननु वृत्तिमत्त्वे श्रोत्रादुपस्थितौ च सत्यामपि तादृशोपस्थित्यविषयत्वात् कथं शाब्दबोधविषयता ? इति चेद् उच्यते गकारादयः क्वचिच्छक्ताः वर्णत्वाद्, नलादिपदं क्वचिच्छक्तं साधुपदत्वाद् इति सामान्यतः शक्तिग्रह एव तत्पदवाच्यः कश्चिदर्थोऽस्ति इत्याकारके वाच्यत्वसम्बन्धेन पदप्रकारकबोधे हेतुरित्यनुभवसिद्धम्" इति शङ्कां प्रस्तुत्य कौण्डभट्टेन यादृशं समाधानं कृतम् न तेनाऽप्युपचारसत्ताऽऽविष्ट एवार्थ इति प्रतिभाति । अत एव विदुषां सम्मुखे तद्व्याख्यानं (तदेव नामार्थनिर्णयः पृ.१३६) प्रदर्श्यते । यतो हि- "अज्ञातार्थकेष्विदमेकं पदम् इति ज्ञातेषु चैत्रगवयनलादिपदेषु श्रुतेषु क एतदर्थ इति प्रश्ने उपमानतल्लक्षणकथनादिना तत्प्रतिवचनानि दृश्यन्ते । अत एव सादृश्याद्युपायेन तद्बोधकत्वेनोपमानादेः प्रसिद्धपदसामानाधिकरण्यादिना तद्बोधकत्वेन कोशादेश्च प्रामाण्यं व्युत्पादयन्ति । अन्यथा नलादिपदानामस्मदादीन् प्रति अबोधकत्वप्रसङ्गश्च नलत्वादिरूपेण शक्तिग्रहाभावात्तेन रूपेण बोधकत्वासम्भवात्" इति । अत्र नव्यनैयायिकास्तु "अतीतनलादिभाविचैत्रादिवर्तमानप्रसिद्धासन्निकृष्टवस्तुगोचराः संस्कारा अनादयो धारारूपेण विशिष्य बोधान्यथानुपपत्त्या" (तत्रैव पृ. १३६) कल्प्यन्ते । अस्य नैयायिकस्य नव्यमतस्य खण्डनं कुर्वतात्र हेत्वसिद्धिदोषः प्रदर्शितो वैयाकरणधुरन्धरेण कौण्डभट्टेन । यथा- "न नैयायिककल्पनं युक्तम्, हेत्वसिद्धेः, देशान्तरगतं प्रसिद्धं चैत्रं काश्यां शृण्वतां विशिष्यागृहीतसङ्गतिकानामपि नलयुधिष्ठिरादिपदवद् बोधानुभवात्, तदनुरोधेनाऽनादिसंस्काराद्विशिष्य शक्तिग्रहसत्त्वाभ्युपगमे, तेषामेव कालान्तरे विश्वेश्वरमन्दिरे तं पश्यताम्, चैत्रोऽत्र नास्ति, इति वाक्याद् बोधो न स्यात्,

स्याद् वा विशिष्य गृहीतसङ्गतिकानां तत्र पश्यतामन्येषाम् । विश्वेश्वरदेवालयत्वं धर्मितावच्छेदकीकृत्य चैत्रत्वाच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानं प्रति तदेवधर्मितावच्छेदकीकृत्य चैत्रत्वप्रकारकतद्वत्ताधियः प्रतिबन्धकत्वाभ्युपगमस्य सर्वसिद्धत्वाद् गृहीतसङ्गतिकानामिव तद्दर्शनात् पदस्मरणञ्च स्यात् । तदुक्तम्–

यत् संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।

पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः ।। इति

चैत्रोऽस्ति न वा ? इति संशयश्च न स्याद् इत्यादि भावप्रत्ययार्थनिरूपणे वक्ष्यति । तथा च विशेषणरूपेण बोधाभावादेव सर्वसङ्गम इति सिद्धा हेत्वसिद्धिः" इति । (तत्रैव पृ. १३६) ।

## १३. कौण्डभट्टसमर्थितार्थस्वरूपम्

एवं च कुत्राऽपि बृहद्भूषणे उपचारसत्ताविष्टोऽर्थ इति न स्वीकृतः । भावप्रत्यार्थनिर्णये (पृ.२६१-६३)- "यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति, स तेषां भावः' इति भाष्यवार्त्तिकानुसारम्, अर्थो द्विविधः, वाच्यः प्रवृत्तिनिमित्तञ्चेति निरूपितम् । वाच्यञ्च द्रव्यं शब्दो वा 'प्रवृत्तिनिमित्तञ्च घटत्वादिजातिर्जातिशब्देषु पाचकादिशब्देषु क्रिया, राजपुरुषादिशब्देषु सम्बन्धः, डित्थादिषु संज्ञा इत्यादिसर्वानुभवानुरोधादवसेयम् । अत एव गोत्वं, पाचकत्वं शुक्लत्वम् इत्यादौ गोशब्दप्रवृत्तिनिमित्तम्, पाचकशब्दप्रवृत्तिनिमित्तं, शुक्लशब्दप्रवृत्तिनिमित्तम् इत्यादिर्बोधो द्रष्टव्यः । अर्थवच्छब्दोऽपि द्रव्ये शक्यतावच्छेदकः, नलेक्ष्वाकुपृथुयुधिष्ठिररामकृष्णादिपदेभ्यः तत्पदवाच्यो यः कश्चिदासीद् इत्येव बोधात् । अनुभवानुरोधाच्छब्द एवावच्छेदकः । अत एव विष्णुर्नारायणः कृष्ण इत्यत्र सामानाधिकरण्यं सङ्गच्छते । अन्यथा घटो घटः, इत्यत्रैव तद् न स्यात् । अनुभवानुरोधात् सर्वनाम्नां विशिष्योपस्थापकत्वम्, इतिसर्वसिद्धम् । तच्च यदि बुद्धिविषयत्वरूपेणोपस्थापितघटत्वपटत्वशालिषु बुद्धिविषयवति शक्तं तत्पदम् इत्येव शक्तिग्रहो बुद्धिविषयत्वं तूपस्थितावनुगमकमात्रं न तु शक्यमिति न तच्छाब्दबोधे भासते" इत्यादिकसमीक्षणेन नातीतार्थकपदज्ञानाय बौद्धार्थः कल्पनीय इत्यपि सिद्धम् ।

## १४. कौण्डभट्टमतेन नञर्थविचारः

नञर्थप्रतिपादनाय याऽऽरोपितबौद्धसत्ता भर्तृहरिणा प्रतिपादिता हेलाराजकैयटादिभिः समर्थिता, सा बौद्धसत्ता प्रत्याख्याता बृहद्भूषणे । प्राग् बौद्धार्थसम्मतं मतं प्राह–

नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ।। नञर्थनिर्णये ४० पृ. (२२४)

तत्रैवास्य खण्डनं विधाय स्वमतमपि सिद्धान्तयितुमाह–

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायस्त्ववधार्यताम् ।। तदेव नञर्थनिर्णये ४१ (पृ. २२७)

अनेन कौण्डभट्टकृतनञर्थविवेचनेनोपचारसत्ता कथमपि न सिध्यति ।

## १५. निष्कर्षः

अत्राध्यायस्य प्रारम्भे हेलाराजसमर्थितबौद्धार्थवादस्य निरासः कृतः । तदनु कैयटनागेशाभ्यां मञ्जूषायां प्रदीपोद्द्योतयोश्च यद्यत्सूत्रभाष्यं बौद्धार्थसाधकत्वेन समुपन्यस्तं, तत्तद्भाष्यविवरणपूर्वकं तत्तद्भाष्येण न कथमपि बौद्धार्थसिद्धिर्भवति, प्रत्युत भाष्यप्रतिपाद्यविषयं दूरे विहाय स्वाभीष्टबौद्धार्थसाधकतयान्यथा व्याचक्षाणाः कैयटनागेशादयः प्रत्याख्याताः । तथा च भर्तृहरिस्वीकृतोपचारसत्ता न व्याकरणशास्त्रविषयिणी इत्यत एव प्रमाणभूतैर्भट्टोजिदीक्षितैः शब्दार्थविचारे न क्वापि नामतोऽप्युक्ता । कौण्डभट्टेन तु बृहद्भूषणे सारे च शशशृङ्गादीनामुपचारसत्तास्वीकारं विनैव प्रातिपादिकत्वं प्रदर्शितम् । अत उपचारसत्ता (बौद्धसत्ता) न मुनित्रयसम्मता, न वा तद्व्याख्यातृसम्मतेत्यप्युक्तम् । तत्र काशिकान्यासयोरपि न क्वाप्युपचारसत्ता स्वीकृता । अतः प्रकरणवशाच्छास्त्रान्तरीयसिद्धान्तेष्वपि वैयाकरणानां प्रवेशाय भर्तृहरिणा स्वीकृतोपचारसत्ता, न व्याकरणशास्त्रोपयोगिनीति निष्कर्षः सुतरां साधितः ।

---

## पञ्चमं पर्यालोचनम्

# नागेशभट्टप्रतिपादितबौद्धार्थसिद्धान्तस्य समीक्षणम्

अस्मिन्नध्याये बौद्धार्थवादस्य प्रबलसमर्थकस्य नागेशभट्टस्य युक्तीनां पर्यालोचनं विस्तरतः क्रियते । एतेषामाचार्यचरणानां बौद्धार्थप्रतिपादने विशिष्टाभिरुचिरवलोक्यते । तेषां तर्का विचार्यन्ते ।

### १. नागेशभट्टदृष्ट्या बौद्धार्थस्य स्वरूपन्तत्प्रत्याख्यानञ्च

अभियुक्तेन सर्वेषामेव सम्मतेन महावैयाकरणेन भर्तृहरिणा 'वाक्यपदीयम्' नामकं दर्शनप्रबन्धं विरच्य्य स्पष्टमेवास्य दर्शनशास्त्रतां वादिनां पुरतः समर्थिता । ततश्च भगवत्पतञ्जलिप्रतिष्ठापितव्याकरणदर्शनस्य साङ्गोपाङ्गविवेचनं महावैयाकरणैः श्रीनागेशभट्टैरेव कृतम् । अनेन विदुषा वैयाकरणसिद्धान्तलघुमञ्जूषाख्ये स्वकीये ग्रन्थरत्ने बौद्धपदार्थस्य प्रामाणिकं विवेचनं सुविहितम् । महाभाष्योद्द्योतेऽपि यत्र तत्र बौद्धार्थस्य सूक्ष्मं स्वरूपं चर्चितम् । अत्र सिद्धान्तितबौद्धार्थसत्तावादस्य प्रत्याख्यानम्मया सारस्वतीसुषमाख्यपत्रिकाया म. म. गोपीनाथकविराजविशेषाङ्के (वर्षे १९८५, पृ. १९३-२०५) पूर्वमेव प्रस्तुतं जिज्ञासुभिस्तत्र द्रष्टव्यम् । अतोऽत्र व्यासेन बौद्धार्थसिद्धान्तो विमृश्यते ।

पदं वाचकम्, अर्थो वाच्यः, सिद्धे शब्दार्थसम्बन्धे इति भाष्यम् (१/१/१ पृ. २२) । अत्रायं भावः- अत्र शब्दार्थयोर्नित्यत्वं तयोः सम्बन्धस्यापि

नित्यत्वम् । नित्याः शब्दाः, अर्थाः, नित्याः सम्बन्धाः, तेषां प्रत्येकं सम्बन्धो नित्यः । तथा च वाचकं पदन्नित्यं वाच्यम्पदमपि नित्यम् । किञ्च, किम्पदं कस्यार्थस्य वाचकम्, सर्वाणि पदानि सर्वार्थवाचकानि ? यथा "सर्वे सर्वार्थवाचकाः" इति सिद्धान्तितं लघुमञ्जूषायां (पृ. २५) योगसूत्रभाष्ये (३/१७) च । उत वा प्रत्येकपदतदर्थयोर्वाच्यवाचकत्वम् ? युक्तयुञ्जानानाम्मते सर्वे शब्दाः सर्वेषां नित्यानामर्थानां वाचकाः । तेषां बोधकत्वसम्बन्धोऽप्येको नित्य एव, तन्माहात्म्येनैव सर्वेषां शब्दानां स्वाभीष्टार्थवाचकता सिध्यति । एवमेव अयुक्तयुञ्जानानामपि बुद्धिविशेषबलेनौपचारिकसम्बन्धान्तरकल्पनया (सामीप्यादि) सति तात्पर्ये सर्वे सर्वार्थवाचकाः सिध्यन्ति । किञ्च, साधारणव्यवहारे "नित्याः शब्दाः, नित्या अर्था नित्यश्च सम्बन्धः" इति स्वीकारेऽपि वाच्यवाचकत्वसाङ्कर्यम्भवति, प्रसज्यते वा । तत्परिहाराय प्रत्येकं शब्दार्थयोः सम्बन्धं निश्चेतुं शाब्दिकानां (वैयाकरणनैयायिकमीमांसकानां) प्रयत्नः, तत्र शब्दनित्यत्ववादिनो वाक्यार्थज्ञाननिपुणा मीमांसकाः प्राहुः-"औत्पत्तिकस्तु शब्दानामर्थैः सम्बन्धो नित्यः" इति मीमांसासूत्रे (१/१/५) "इदम्पदमिममर्थं बोधयतु, अस्मात् पदाद् अयमर्थो बोद्धव्यः" इत्याकारा वेश्वरेच्छा शब्दार्थयोः सम्बन्धः, इति प्रमाणपटवो नैयायिकाः । यथा गदाधरेणोक्तं शक्तिवादे -"सङ्केतो लक्षणा चार्थे पदवृत्तिः, इदं पदमिममर्थं बोधयतु" इति । वैयाकरणास्तु बोधजनकत्वयोग्यतारूप-शब्दार्थयोरनादिसम्बन्धः, इति प्राञ्चः,"शब्दार्थयोरितरेतराध्यासरूपो वाच्यवाचकभावापरपर्यायस्तादात्म्यं सम्बन्धः" इति नव्या लघुमञ्जूषायां (पृ.२५) वदन्ति । स्वस्वशास्त्रीयवासनानुसारेण तर्कयन्तः सिद्धान्तस्थापन-पटीयांस इति नात्र विचिकित्सावसरः । सर्वेषां स्वशास्त्री-यलक्षणसमन्वयपद्धतिर्बौद्धिकव्यायामकौशलोल्लासं समुद्वेलयन्ती प्रमोदयति मतिमतां मानसम् । कथं ते स्वतर्ककौशलबलेन परमतम्प्रत्याख्यातुं प्रयतन्त इति पाठं पाठं व्युत्पित्सूनां बुद्धिः कमप्यनिर्वचनीयं बौद्धिकमानन्दमनुभवन्ती, विस्मरति बाह्यविषयानन्दम् । एवमिह शब्दार्थसम्बन्धविषये वैयाकरणमतं स्वान्तःसुखाय समालोचयितुं प्रवर्त्तामहे ।

अत्र प्राचीनमतमनुसृत्य भट्टोजिदीक्षिता आहुर्यथा—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥

वाक्यपदीये (३/३/२९) भूषणे शक्तिनिर्णये च (३६)

यथेन्द्रियाणां स्वविषयेषु बोधजनकयोग्यतारूपसम्बन्धोऽनादिर्भवति, तथैवार्थैः सह शब्दानामप्यनादिर्बोधजनकयोग्यतारूपः सम्बन्धः, इति संक्षिप्तार्थः। अस्मिन् मते किं शब्दस्वरूपम्, किञ्चार्थस्वरूपम्, ययोरनादिसम्बन्ध उच्यते ? तथा च शब्दार्थयोर्बाह्यं स्वरूपमुत वा तद्विलक्षणं यत्किञ्चिद्बुद्धिविषयसमाविष्टं बौद्धिकम् इत्येवं परो विचारः। न हि सविशेषं चिकीर्षितम्, अथापि शब्दस्वरूपं बौद्धं स्फोटात्मकं गृह्यते, किन्तत् स्फोटस्वरूपम् ? कतिधा स्फोट इत्यादिकं प्रकरणप्राप्तमुपरिष्टाद् वक्ष्यामः।

किञ्च, नव्यमते शब्दार्थयोरितरेतराध्यासरूपं वाच्यवाचकभावापरपर्यायं तादात्म्यमनादिसम्बन्धोऽभिप्रेतः । बोधजनकयोग्यतायाः सम्बन्धत्वाभावात्, सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो विशिष्टबुद्धिनियामकश्चेत्यादिना बोधजनकयोग्यतायाः सम्बन्धत्वासिद्धेरित्यत्र तात्पर्यम् (लघुमञ्जूषायाम् पृ. १७,२३)।

अस्तु लघुकायेऽस्मिन् शोधप्रबन्धे नव्यमतमेवास्माभिर्यथामति परीक्षितुं प्रयत्यते । चिकीर्षितेऽस्मिन् सम्बन्धस्वरूपविवेके सम्बन्धिनोश्शब्दार्थयोः किं स्वरूपमिति विचारपथमारोहति सम्बन्धस्य सम्बन्धिसापेक्षत्वात् ।

तत्रादौ शब्दार्थयोस्तादात्म्यं सम्बन्धः, इति तादात्म्यवादिनां मतमनुसृत्य शब्दार्थयोः स्वरूपं निरूप्यते ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥  वाक्यपदीयम् १/१२३

इति वैयाकरणाः ।

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते ॥  काव्यादर्शः १/४

इत्याऽलङ्कारिकाः । इदमत्र तात्पर्यं पुरोवर्तिनं घट पश्यन्नपि तमजानन्नभिज्ञं पृच्छति- 'कोऽयं पदार्थः ?' स च घट इत्युक्त्वोत्तरं ब्रूते । घकाराद्यानुपूर्वीघटितघटशब्दो न हि पदार्थरूपः । अथापि 'घटः' इत्युच्यते अथवा

घटरूपेण गृह्यते । न हि पृथुबुध्नोदराकारस्वरूपः पदार्थो घटशब्दस्वरूपस्तथापि घटशब्दात्मकतया गृह्यते । तेन सिध्यति घकाराद्यानुपूर्वीघटिताः शब्दाः स्वेन रूपेण सह स्ववाच्यार्थस्वरूपतया गृह्यन्ते । एवमेवोत्तमवृद्धेन 'घटमानय' इति प्रैषानन्तरं प्रेष्यो मध्यमः पृथुबुध्नोदराकारपदार्थमानयति, न त्वानयनक्रियायाः कर्मीभूतघकाराद्यानुपूर्वीघटितं घटशब्दस्वरूपम् । एवमुभयथाऽपि घटशब्दो घटपदार्थस्वरूपाभिन्नस्वरूपोऽपि सिध्यति । एवमेव घटपटादिशब्दानां तत्र तत्र तदर्थानामपि समाना स्थितिः समाश्रीयते । अतः पदार्थः स्वस्वरूपसमभिव्याहृतस्ववाचकशब्दाभिन्नो वाचकशब्दोऽपि स्वस्वरूपसमभिव्याहृतस्ववाच्यपदार्थस्वरूपाभिन्नः । अत एव 'शब्दार्थयोः स्वसामानाधिकरण्येनेतरेतरात्मकत्वात्तादात्म्यमप्यनुभूयते । इदमेवानुभूयमानतादात्म्यं शब्दार्थयोः सम्बन्धः । शब्दार्थयोः सम्बन्धिनोरनादित्वादभ्युपगमादनादिरेव सिद्धः शब्दार्थसम्बन्धः । तथा च वर्णानुपूर्वीघटितेन स्वरूपेण सहार्थस्वरूपोऽपि भवति । अर्थश्चापि स्वेन पृथुबुध्नोदराकारादिस्वरूपेण सह स्ववाचकशब्दस्वरूपोऽपि भवतीति शब्दार्थावन्योऽन्यात्मकौ । अत्र तादात्म्यं एवैनयोः सम्बन्धः सिद्धः । अतो युक्तमेवोक्तम्– "अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इति वाक्यपदीये (१/१२३) । शब्दानुविद्धाः पदार्थाः, युक्तं चेदं योगसूत्रभाष्यं–'योऽर्थः स शब्दः, यः शब्दः, सोऽर्थः' (लघुमञ्जूषा पृ. २५ योगसूत्रभाष्यञ्च ३/१७) । एवमेव शाब्दतरङ्गिण्यामपि शब्दार्थयोरितरेतरात्मकं स्वरूपमुक्त्वा तयोस्तादात्म्यं सम्बन्धं दृढीकर्त्तुं विशिष्याह ग्रन्थकारः-

"अपि च कोकिलरूपार्थस्य पिकपद एव शक्तिं जानतः कोकिलपदे तामजानतः पुंसः कोकिलदर्शने सति 'कोकिलोऽयम्' इत्यनुव्यवसायापत्तिः । ज्ञानेऽर्थमात्रस्य भानादर्थस्य च तेन ज्ञातत्वात् । अतो वाचकपदमपि तत्र भासत इति स्वीकरणीयम् । कोकिलपदस्य वाचकस्य तेनाज्ञानान्न तस्य तथानुव्यवसायापत्तिरिति" (पृ.६६) ।

एवमर्थे शब्दो भासते, अतोऽर्थः स्वेन स्वरूपेण सह स्ववाचकशब्दस्वरूपोऽपि भवति । एवमेव शब्दोऽपि स्वेन रूपेण सह स्ववाच्यार्थस्वरूपोऽपि भवतीत्येव सुदृढं सुस्पष्टं बोभूयते । इयांस्तु भेदः पदार्थं विदाङ्कुर्वन् पदार्थस्वरूपेण सह पदार्थं तद्वाचकशब्दप्रतिभासितं स्वरूपमपि जानन् वाचकपदपर्यायानभिज्ञत्त्वाद् अज्ञातं पर्यायशब्दमर्थे प्रतिभासमानमपि तत्त्वतो न जानाति । अतः पदार्थः स्वेन रूपेण ज्ञायमानः स्ववाचकशब्दैरपि

प्रतिभासितत्वादवच्छेदकावच्छेदेन वाचकशब्दस्वरूपः । किञ्च, तथात्वेऽप्यनुभवितुर्ज्ञाने न हि कात्स्र्न्येनेन भासते । अनुभवितृज्ञानवैकल्यमत्र कारणम् ।

एवमत्रैव ग्रन्थे शब्दार्थयोरितरेतरात्मकत्वं तयोस्तादात्म्यरूपसम्बन्धश्च प्रपञ्चयितुं पुनस्तृतीयविकल्पमाह–''किञ्च, 'अयं घटः' इति प्रत्यक्षे घटस्य विशेष्यता घटत्वस्य प्रकारतेति विषयताभाननियमनिर्वाहार्थमपि पदभानमावश्यकम् । पदभाने सति ''यज्ज्ञानं यत्पदविषयकं तत् तज्जन्यबोधीयविषयतासमानविषयताकम्'' इति नियमाद् घटविशेष्यत्वादिनियमो निर्वहति'' इति शाब्दतरङ्गिण्याम् (पृ.६६) ।

एवमपि प्रत्यक्षीक्रियमाणेषु घटपटादिपदार्थेषु प्रकारतया विशेष्यतया ज्ञानार्थं विषयताविवेकार्थं वापि पदतदर्थयोरभिन्नस्वरूपत्वं स्वीकार्यम् । तच्च तादात्म्यसम्बन्धेन, एवमपि शब्दार्थयोरन्योऽन्याभिन्नस्वरूपत्वं तादात्म्यस्य च तत्र सम्बन्धत्वं सुतरां सिध्यतीति विकल्पाशयः ।

एवमेव–''घटादिपदानामपि घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ने शक्तिः । अतो घटपदजन्यबोधे विशेष्यत्वादिकं भासते । तस्माद् घटपदजन्यबोधे विशेष्यत्वादिकं भासते । व्यवसाये विषयता भासते इत्यकामेनाप्यङ्गीकार्यम् । कथमन्यथा घटमहं जानामीत्यनुव्यवसाये विषयत्वं भासते । व्यवसायविषयस्यैवानुव्यवसाये भानात् । व्यवसायाविषयस्यापि व्यवसायविषये विद्यमानस्यानुव्यवसाये भानोपगमे 'अयं गुडः' इति व्यवसायानन्तरभाव्यनुव्यवसायो व्यवसायविषयगुडे विद्यमानं माधुर्यमवगाहेत । विषयतायाश्च भानं न विषयत्वान्तरम्, अपि तु स्वमेवेति नानवस्था । तस्मात् प्रत्यक्षादावपि विषयताभाननियमनिर्वाहाय पदभानमावश्यकम् इति'' तत्रैव (पृ. ६६-६७) ।

प्रत्यक्षज्ञानेऽपि प्रकारतादिविषयतया तज्ज्ञानं जायते, तदेवानुव्यवसायात्मकं भवति, न हि ततोऽधिकं न्यूनं वा । अतस्तादृशविषयता ज्ञाननिर्वाहार्थमपि शब्दार्थयोरभिन्नस्वरूपस्वीकार आवश्यक इत्यत्रेत्याशयः ।

एवमेव शाब्दतरङ्गिण्यां (पृ.६७) पण्डितराजेन प्रस्तुतश्चतुर्थो हेतुरत्र दीयते–''न्यायसूत्रकर्तुर्गोतमस्यापि शाब्दबोधे पदभानं सम्मतम् । 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं' (१.१.४)

इति प्रत्यक्षलक्षणसूत्रम् । तत्राव्यपदेश्यम् इत्यस्य वाचकशब्दाविषयकमित्यर्थः एवञ्च, प्रत्यक्षं शब्दाविषयकं वदन् 'शाब्दबोधं वाचकशब्दविषयं मन्यते सूत्रकारः । तस्मिन्नेव सूत्रे 'शब्दविषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः' इति वदतो न्यायभाष्यकारस्याप्यमितोऽयमर्थः । व्यवस्थिते हि शाब्दे पदभाने शब्दविषयकत्वात् प्रत्यक्षस्य शाब्दत्वमापादयितुं शक्यते । शब्दविषयकत्वमेव शाब्दत्वं न तु शब्दजन्यत्वम् इति तत्रैव वाचस्पतिमिश्रैरुक्तम् । तथा च नैयायिकैः शाब्दे पदभानाङ्गीकारादन्यत्र प्रत्यक्षादौ तेषां तदभानाग्रहो मुधैव ।"

यद्यद्विषयकं ज्ञानं तत्तदेव तेन चक्षुरिन्द्रियेण प्रत्यक्षीक्रियमाणो घटः प्रत्यक्ष एव । अतो घटविषयकं ज्ञानं प्रत्यक्षम् । तत्र यद्यपि घटस्वरूपविषये घटपदभानमपि जायते । किञ्चाथापि तादृशज्ञानं न हि शाब्दम्, शाब्दविषयकत्वाभावात्, प्रत्युत प्रत्यक्षमेव चक्षुरिन्द्रियसंनिकर्षजन्यत्वात् । अत एव प्रत्यक्षविषयकत्वात् । किञ्च तत्रापि पदभानं भवतीति प्रत्यक्षेऽपि शब्दार्थयोरभेदः सिद्ध एव । इत्यत आह—'शब्दार्थयोः स्वरूपाभेदो न्यायभाष्यकर्तुः सम्मतः" इति ।

एवमेव प्रत्यक्षादौ विषयपदभानं न जायत इत्यभिमानो नैयायिकानामयुक्त एव, प्रत्यक्षीक्रियमाणोऽपि घटः पृथुबुध्नोदराकारतया ज्ञायमानः सन् घट इत्यपि गृह्यते । प्रत्यक्षेऽपि विषये स्वरूपेण ज्ञायमाने तद्वाचकपदं भासत एव । पदतदर्थयोरभेदस्तादात्म्यकारापन्न इत्येवाभिप्रेत्योच्यते शाब्दतरङ्गिण्याम् (पृ.६८)—"अयं घटः, इत्यादिप्रत्यये पदार्थवाचकशब्दानुविद्ध एवार्थो भासते इति । शाब्दे तु यज्ज्ञानं यत्पदविषयकं तत्तज्जन्यबोधीयविषयतासमानविषयताकम्' इति नियमादर्थनिष्ठप्रकारताविशेष्यतारूपविषयताकं पदभानमपि भवत्येव । अत एवोच्यते घटादिपदानामपि घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छिन्ने शक्तिर्यथा घटत्वनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना शब्दधीर्भवति "।

अतः पदपदार्थयोस्तादात्म्यस्वीकारोऽतीवावश्यकः । तत्रैवान्वयव्यतिरेकव्याप्तिभ्यामेवेदं द्रढयति ग्रन्थकारः शाब्दतरङ्गिण्याम् (पृ.६८) । किञ्च, "यद्यत् सामानाधिकरण्येन प्रतीयते, तत्तदात्मकं यद्यदात्मकं न भवति, तत्र तत्सामानाधिकरण्येन प्रतीयते । यथा गौर्नाश्वात्मको गौरश्व इत्यश्वसा-

मानाधिकरण्येन न प्रतीयते । अर्थस्तु वाचकशब्दसामानाधिकरण्येन प्रतीयत इति शब्दात्मकः । न च गव्यश्वसामानाधिकरण्येन प्रतीत्य-भावस्तयोरुपायोपेयभावात्, न तु तादात्म्याभावात्, शब्दार्थयोस्तू-पायोपेयभावसत्त्वात् सामानाधिकरण्येन प्रतीतिरिति वाच्यम्, उपायोपेयभावसत्त्वेऽपि रूपचक्षुषोर्वह्निधूमयोश्च सामानाधिकरण्येन प्रतीतेरद-र्शनादुपायोपेयभावस्य सामानाधिकरण्येन बुद्धिनियामकत्वाभावात् । किञ्च, उपायोपेयभावस्य सामानाधिकरण्येन बुद्धिप्रयोजकत्वे शाब्द एव प्रत्यये तयोः सामानाधिकरण्यं भासते, न त्वनुमित्यादौ, तत्रार्थस्य शब्दोपेयत्वाभावात् । साधितं च सर्वत्र ज्ञाने पदभानम्, तस्मादत्यन्तभिन्नयोर्घटपटयोः घटः पटः इति सामान्याधिकरण्येनाप्रतीतेरत्यन्ताभेदेऽपि घटो घट इति सामान्याधिकरण्येन बुद्धेरदर्शनाद् 'नीलो घटः' इति सामान्याधिकरण्येन प्रतीतेर्नीलघटयोरिव शब्दार्थयोरपि सामानाधिकरण्येन प्रतीतेर्भेदसमा-नाधिकरणाभेदरूपं तादात्म्यं सिध्यति'' ।

अनेनैव तादाम्यलक्षणमपि सिध्यति– ''भेदसमानाधिकरणाभेदरूपं तादात्म्यम्'' इति । तेन पदतदर्थयोस्तादात्म्येऽपि पदतदर्थयोरभेदस्येव भेदस्यापि सत्त्वाच्छब्दादेव स्वादयः, न त्वर्थात्, पदतदर्थयोरभेदे सिद्धे स्वादयः प्रत्यया अर्थादपि प्रसज्यन्त इति न वाच्यम्, उक्ततादात्म्येऽभेदरूपे भेदस्यापि सत्त्वात् । उक्तकोट्या शब्दार्थयोः सामानाधिकरण्यं भेदाभेदरूपं च तादात्म्यम् ।

## २. भट्टनागेशकृततादात्म्यलक्षणसमीक्षा

वैयाकरणसिद्धान्तलघुमञ्जूषायां (पृ.३४) नागेशभट्टास्तु–''इदमेव तदात्म्यं शब्दार्थयोरितरेतराध्यासरूपम् । अत एव तद्भिन्नत्वे सति तदभिन्नत्वेन प्रतीयमानत्वम्'' इत्याचक्षते, तदद्वैतवासनया । वस्तुतोऽध्यासमूलकतादात्म्यस्य प्रमात्वकत्वं सिध्यति । भ्रमात्मकसम्बन्धस्याऽप्रमात्मकत्वम्, अप्रमात्वकत्वाद् यथार्थज्ञानग्राहकत्वाभावाद् शक्तित्वं दूरापेतं भवति । वास्तवसतोः पदतदर्थयोः सामानाधिकरण्यबलेन भेदघटिताभेदरूपतादात्म्यं तु यथार्थज्ञानग्राहकत्वाद् भेदस्यापि वास्तवत्वाद् भेदाभेदयोरुभयोरपिं तत्र समानरूपेण जागरूकत्वात् । अत एव यथार्थशक्तिग्राहकत्वात् पदतदर्थयोर्विभागरूपभेदस्यापि तत्र विद्यमानत्वाद् अभेदेऽपि यथार्थशक्तिग्राहकत्वात् स्वभावसिद्धं भवति । तथात्वे

च तादृशतादात्म्येन पदस्यार्थवत्त्वात्, अत एव प्रातिपदिकत्वाद् विविक्तार्थग्रहणे प्रथमा सुलभा । अत एव तादृशतादात्म्येऽपि पदतदर्थयोरभेदेऽपि भेदस्य विविक्तत्वाद् भेदार्थकमतुबपि सुलभः, तद्धितानां भेदवाचकषष्ठ्यर्थकत्वात् । "षष्ठ्युत्पत्तिस्तु भेदकात्" इति वाक्यपदीयं समञ्जसं भवति ।

एवं शब्दार्थयोस्तादात्म्यं सिसाधयिषुः पुनरपि प्रकारान्तरेण निर्ब्रूते । यथा—"अपि चातदुपायकोऽतद्विषयकश्च न तत्पुरस्सरो दृष्टः । सर्वोऽपि सविकल्पप्रत्ययः शब्दपुरस्सरः । अतश्च सविकल्पकप्रत्ययः शब्दविषयकः शब्दोपायको वा वाच्यः । आद्येऽर्थज्ञानस्य शब्दज्ञानात्मकत्वे सिद्धं शब्दार्थयोस्तादात्म्यम्" इति शाब्दतरङ्गिण्यां (पृ.६८) पूर्वपक्षे प्रोक्तम् ।

अत्रेदं तात्पर्यम् -यः कोऽपि पदार्थः, स उपायकाविनाभूतः स्वविषयक एव वाऽवगम्यते । अनेनैव नियमेन सविकल्पकज्ञानमात्रं शब्दोपायकं शब्दविषयकं वा गृह्यते । सविकल्पज्ञानग्रहणे तस्य शब्दोपायकत्वे तूपायोपेययोरभेदरूपतादात्म्यं सिध्यति । द्वितीये शब्दविषयकत्वे तु—"द्वितीये किं शब्दोऽज्ञातः सन्नुपायः, उत ज्ञातः ? नाद्यः, निर्विकल्पकस्यैवासिद्धिप्रसङ्गात् । विशिष्टबुद्धौ विशेषणज्ञानस्योपायत्व एव निर्विकल्पकं सिध्यति । अज्ञातस्याप्युपायत्वेऽज्ञातस्यापि घटत्वस्य 'अयं घटः' इति विशिष्टबुद्धिजनकत्वसंभवाद् घटत्वज्ञानानपेक्षणेन निर्विकल्पकाङ्गीकारस्य व्यर्थत्वात् । द्वितीयपक्षे च सिद्धं नः समीहितम्"( तत्रैव पृ. ६८) ।

सविकल्पकज्ञानं शब्दविषयकम् इति द्वितीयपक्षे किं शब्दोऽज्ञातः सन् कारणं ज्ञातो वा विकल्पः, आद्यपक्षम् असंभवग्रस्तत्वाद् दूषयित्वा द्वितीयविकल्पे विचार्यमाणे ज्ञातस्य शब्दस्य सविषयकत्वेन सिद्धं शब्दार्थयोस्तादात्म्यम् । अत एव निष्कृष्टार्थं ब्रूते—"असंनिहितस्य न ज्ञानं संभवति । शब्दश्च न संनिहितः । अतोऽर्थतादात्म्यादर्थसंनिधानमेव शब्दसंनिधानमिति सन्निहितस्य शब्दस्य ज्ञानं भवेत् । तथा च सिद्धं शब्दार्थयोस्तादात्म्यम्" इति (तत्रैव पृ.६८)

अत एव 'कः शब्दः' इति प्रश्नेऽपि घट इत्ययं शब्द इत्युत्तरयन्ति, कोऽर्थ इति प्रश्नेऽपि घट 'इत्ययमर्थः' इत्युत्तरयन्ति । तथा च

शब्दार्थप्रश्नयोरेकाकारोत्तरदर्शनात् तन्मूलतादात्म्यप्रतीतिस्तथा च शब्दार्थयोस्तादात्म्यं सिध्यतीति लघुमञ्जूषायां (पृ. ३२) ध्वन्यते।

इतोऽपि''पदं श्रुतम्, अर्थं श्रृणु'' इति व्यवहरन्ति। अत्र च अर्थपदं न शब्दपरम्। पदं श्रुतमिति पृथगभिधानादपि चार्थपरमेव, अर्थस्य च श्रावणप्रत्यक्षकर्मत्वं न संभवति, अपि च शब्दस्यैव। तस्माद् शब्दार्थयोस्तादात्म्यमभिसंधायैव 'अर्थं शृणु' इति व्यवहरन्तीति। निरुक्तप्रयोगमूलप्रतीत्यापि शब्दार्थयोस्तादात्म्यं सिध्यति'' इति शाब्दतरङ्गिण्यां (पृ.६८) मञ्जूषायाञ्च (पृ.३३) पठितम्।

किञ्च, वाच्यम् आदैच्, वाचको वृद्धिशब्दश्च समानाधिकरणे 'वृद्धिरादैच्'' इति(पा. १/१/१) सूत्रं प्रयुञ्जानः पाणिनिरपि वाच्यवाचकयोस्तादात्म्यम् अभिप्रैति। प्रणववाच्यं ब्रह्म, वाचकं प्रणवं च सामानाधिकरण्येन निर्दिशन्ती-''ओमित्येकाक्षरं ब्रह्म'' इति श्रुतिरिपि वाच्यवाचकयोस्तादात्म्यं द्रढयति'' इति तत्रैव (पृ.६९) प्रोक्तम्।

एवं "पिनाकिनो मानभञ्जको रामो न तु तद्वाचकः शब्दः। रामेति द्व्यक्षरनाम्नि मानभञ्जकत्वं प्रतिपादयन्नयं 'रामेति द्व्यक्षरं नाम मानभङ्गपिनाकिनः' इति प्रयोगः शब्दार्थयोरभेदाध्यासमूलक इति तेन तादात्म्यं सिध्यति। अत एव ''हिरण्यपूर्वं कशिपुं प्रचक्षते'' इति प्रयोगोऽपि संगच्छते। अत्र पुरुषविशेषं हिरण्यपूर्वं कशिपुं प्रचक्षते इत्युक्तम्, हिरण्यपूर्वकत्वमेव कशिपुपदस्यैव। तथा चार्थस्य हिरण्यपूर्वकशिपुशब्दस्य च सामानाधिकरण्येन प्रयोगस्तयोस्तादात्म्यं द्रढयति''–पण्डितराजः शाब्दतरङ्गिण्याम् (पृ.६९)।

अयं शब्दार्थयोस्तादात्म्यरूपसम्बन्धसाधको ग्रन्थ एवेति न भूयो व्याख्यानादिप्रपञ्चावसरः। प्रत्युत, अयमेव तादात्म्यसम्बन्धः शब्दार्थयोरितरेतराध्यासमूलक उत वा सामानाधिकरण्येनेत्यत्रावधेयम्। जातिव्यक्त्योर्यो यदात्मकः, स तद्भिन्ननिर्देशार्थः। यथा मृदात्मको घटो मृद्भिन्नः, यो यद्व्याप्यः, स तद्भिन्ननिर्देशार्थ इति द्वितीयो नियमः। यथा राजपुरुषो राजाभिन्ननिर्देशार्थः। अत्र भिन्नयोर्मृद्घटयो राजपुरुषयोस्तादात्म्यसम्बन्धः, स च भेदाभेदघटितः। अस्मिन् सम्बन्धे भेदाभेदौ स्वाभाविकौ वास्तविकौ भवत इति नहीतरेतराध्यासमूलोऽयं सम्बन्धः। यो यदायत्तस्थितिप्रवृत्तिकः, स तद्भिन्नत्वनिर्देशार्थो यद् यदायत्तस्थितिप्रवृत्तिकं

वस्तु, तत्तद्भेदव्यपदेशार्हम् इत्याम्नायते छान्दोग्ये प्राणसंवादे- ''न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते। प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्ति'' इत्यादिना। अत्र यथा वाङ्मनश्चक्षुप्राणादीनां स्वरूपेण सम्बन्धेन वास्तविकेऽपि मिथो भेदेऽपि प्राणायत्तस्थितिप्रवृत्तित्वात् प्राणेन सहाभेदोऽपि वास्तविकः। एतादृशभेदघटितो मनःप्राणादीनां यः सम्बन्धः, सोऽपि तादात्म्यसम्बन्ध इत्युच्यते। एवञ्च, यो यद्व्याप्यः, स तद्भिन्नः, यथा ब्रह्मव्याप्यं जगद् ब्रह्माभिन्नम्। अत्र जगत्त्वेन कार्यत्वेन रूपेण जगत्कर्तृत्वेन रूपेणेत्युभयोर्भेदोऽपि वास्तविकः, अनुभूयमानत्वात्। अभेदोऽपि वास्तविको ब्रह्मणा जगत्कर्त्रा सह कार्यकारणयोरभेदाभ्युपगमात्। एवम् एतादृशवास्तविकभेदाभेदघटितस्तादात्म्यसम्बन्धः प्रामाणिकैरुच्यते, न तु तादात्म्यसम्बन्ध इतरेतराध्यासमूलको भवितुमर्हति। वैयाकरणसिद्धान्तलघुमञ्जूषायां (पृ. २५) नागेशभट्टपादास्तु- ''इतरेतराध्यासमूलको भेदाभेदघटितस्तादात्म्यसम्बन्धः'' इत्याहुः। किञ्च, तदेतत् सर्वं केवलाद्वैतवासनयेति प्राग् उक्तमेव, अयुक्तं चाप्येवमेव। अध्यासमूलके तादात्म्यसम्बन्धे स्वीक्रियमाणे च कोऽयम् अध्यासपदार्थ इति जिज्ञासा भवति। भ्रमसामग्रीसत्त्वे ह्यध्याससिद्धिः। भ्रमसामग्री च भ्रममात्रे सावयवत्वम्, इन्द्रियसंयुक्ततया ग्राह्यत्वं, सादृश्यं, पूर्वप्रमाजन्यम्, संस्कारो दोषश्च। यथा शुक्तिरजतयोरनयैव सामग्र्या दृश्यत इतरेतराध्यासः। शक्तिरजतयोरुभयोरपि सावयवत्वाद् एकेनैव चक्षुरिन्द्रियसंनिकर्षेण ग्राह्यत्वात्। उभयनिष्ठशुक्लत्वस्यापि भूयो धर्मस्य विद्यमानत्वात्। उक्तसादृश्यस्य पूर्वप्रमाजन्यत्वात्। संस्कारस्यापि तादृशस्य सिद्धेरुद्बुद्धेश्च दृष्टिदोषस्य तत्र सत्त्वाद् शुक्तिरजतयोरितरेतराध्यासो भ्रमज्ञानरूपः सिध्यति। किञ्च, प्रकृते शब्दार्थयोरुभयोः सावयवत्वेऽपि समानेन्द्रियसंयुक्ततया ग्राह्यत्वाभावात्। तयोरितरेतराध्याससिद्धिः स्पष्टैव।

नन्विन्द्रियसंयुक्ततया ग्राह्यत्वं तु वर्तत एवेति चेदुच्यते-शब्दार्थयोः सादृश्यं खपुष्पायितं भवति। उभयत्र समानस्य कस्यचिद् भूयो धर्मस्यैवाऽभावात्। सादृश्याभावे च तथात्वे तु पूर्वप्रमाजन्यसंस्कारस्य सुतराम् अभावः। न चाप्यत्र दोषसिद्धिः। पुरोवर्तिनं पृथुबुध्नोदराकारं घटं पश्यन् द्रष्टा वक्ता वा चक्षुरिन्द्रियसंनिकर्षेण विशुद्धेन गृह्णाति। नेह कश्चिद् दोषः। एवम् अध्याससामग्र्यभावे शब्दार्थयोरितरेतराध्यासो न सिध्यति। कुतस्तद्रूपतादात्म्यसम्बन्धः। अतोऽगत्या पूर्वनिरुक्तकोटिभिः सामानाधि-

करण्येन स्वाभाविकभेदाभेदघटितस्तादात्म्यसम्बन्ध एव स्वीकार्यः । अत एवाहुः प्रामाणिकाः- ''भेदसहिष्णुरभेदसम्बन्धस्तादात्म्यम्'' इति । वस्तुतोऽयमेव शब्दार्थयोस्तादात्म्यसम्बन्धः, स एव शक्ति । एवं हि शब्दार्थयोस्तादात्म्यसम्बन्धे सिद्धेऽन्नमित्युक्ते न मुखपूरणापत्तिः, न चापि 'घटो नास्ति' 'शशशृङ्गं नास्ति' इत्यादिषु वाक्येषु दोषभीत्या शब्दार्थयोर्वस्तुतो बौद्धसत्तां स्वीकुर्वन्ति, तेषा मनोराज्यं सिध्यति ।

नव्यव्याकरणमते शब्दार्थयोस्तादात्म्यसम्बन्धः शक्तिरिति फलितार्थोऽपि शब्दार्थयोः बाह्यसत्तयैव सुतरां सिध्यति । इतरेतराध्यासमूलकं तादात्म्यम् आदाय 'अन्नम्' इत्युक्ते पूरणापत्तिदोषान् परिहर्तुं ये नैयायिकादयः प्रयतन्ते, तेऽपि मन्ये तादात्म्यसम्बन्धलक्षणप्रकारे नागेशपादा इवाद्वैतवासनावासितान्तःकरणा नात्र शुद्धां शास्त्रीयव्यवस्थाम् अनुसरन्ति, अथवा दोषदर्शिनो नैयायिका वादिनां वदतो व्याघातसिद्धय एव प्रयतन्ते । अस्तु, शब्दार्थयोरभेदाध्यासमूलकतादात्म्यम् आदाय बौद्धयोरेव शब्दार्थयोर्वाच्यवाचकभावः, तादृशयोरेव शब्दार्थयोस्तादात्म्यम्, तदेव शक्तिरिति पक्षसाधकयुक्तयोऽपि वादिनां स्थालीपुलाकन्यायेन परीक्षन्ते । शब्दार्थयोर्बाह्यसत्ताभ्युपगमे बौद्धसत्तया स्वीकारे 'अन्नम्' इत्युक्ते मुखपूरणापत्तिः । बाह्यस्यैवान्नस्य पूरकत्वाद् बौद्धार्थस्य तु पूरकत्वाभावान्मुखपूरणापत्तिदोषं परिहर्तुम् अर्थस्य बौद्धसत्ताऽवश्यं स्वीकार्येत्युच्यते, तदसत्, तव मते शब्दार्थयोरभेदस्याध्यस्तत्वात् प्रामाण्यग्रहेऽध्यस्तस्यावश्यं बाध्यत्वान्नहि 'अन्नम्' इत्युक्ते मुखपूरणापत्तिदोषः प्रसज्यते । यथा रज्जावध्यस्तस्याऽहेः प्रामाण्यग्रहे सर्पस्य बाधितत्वाद् रज्जुज्ञानमेव भवति, न तु सर्पज्ञानम् । एवमेव अन्नमित्युक्ते, अध्यस्तस्य पूरकत्वरूपस्यार्थस्यावश्यं बाधितत्वान्न हि पूरकत्वापत्तिरूपो दोषः प्रसक्तः । तथात्वे तु शब्दार्थयोर्बौद्धसत्तास्वीकारो मुधैव ।

नन्वभेदस्याध्यस्तत्वेऽप्यन्नमित्युच्चारणसमकालिकज्ञानकालेऽध्यस्तस्यार्थस्याऽबाधितत्वाद् अर्थस्य बौद्धसत्तास्वीकार आवश्यक इति चेत्, न, तज्ज्ञानस्य प्रामाण्यानास्कन्दितत्वात् । यथा रज्जावध्यस्तसर्पज्ञानस्याप्रामाणिकत्वम् । अत एव रज्जुर्वा सर्पो वेति साध्यसंदेहरूपां पक्षताम् उद्भाव्य रज्जुरियं चेतनव्यापाररहितत्वाद् इत्यनुमित्या परीक्ष्य सञ्जातभाने यथार्थज्ञानकालेऽध्यस्तस्य सर्पस्यावश्यं बाधितत्वात् रज्जुमेव गृह्णाति ज्ञाता ।

एवमेव 'अन्नम्' इत्युक्तेऽध्यस्तस्य पूरकस्यान्नपदार्थस्य एवमेव गतिः। 'अन्नम्' इत्युक्ते शब्दोऽयम् अर्थो वेति संदिह्य शब्द एवायम्, नार्थः, उच्चारयितुर्मुखस्यापूरितत्वात्। अतोऽनया युक्त्या बौद्धार्थस्वीकारो नावश्यकः। नन्वेवं स्वतः प्रामाण्यवादो व्याहन्यत इत्यपि वक्तुं न शक्यम्। भवतु नाम का ते हानिः, नैयायिकमानिनः। स्वतःप्रामाण्येऽपि यथा मीमांसकमते 'घटमहं जानामि' अथवा 'ज्ञातो मया घटः' इति ज्ञातताऽन्यथानुपपत्त्या गृह्यमाणं स्वतःप्रामाण्यं परम्परयाऽभ्युपगम्यते, तथात्रापि स्वतस्त्वमलमिहातिविस्तरेण, अप्रकृतत्वात्।

इतश्च तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टं ज्ञानं हेतुरिति कार्यकारणभावो गदाधरभट्टपादैरुक्तः। स एव नागेशभट्टैर्लघुमञ्जूषायां (पृ.१०) स्वीकृतः। अतस्तेषां मते शब्दार्थयोर्वाच्यवाचकभावापरपर्याय इतरेतराध्यासरूपाभेदमूलकतादात्म्यसम्बन्धस्य तादात्म्यसत्त्वेऽपि तद्धर्मावच्छिन्नविषयकशाब्दधिय एव साम्राज्यं भवति। एवञ्च, 'अन्नम्', इत्युक्तेऽन्नत्वरूपशक्यतावच्छेदकधर्मावच्छिन्नविषयकज्ञानस्वरूपस्यार्थोपस्थितिर्भवति, न तु विषयशरीरस्य पूरकत्वादेः।

## ३. बौद्धसत्तास्वीकारस्तत्समीक्षा च

अर्थस्य सत्ता कुत्र बहिर्वा बुद्धौ ? कोऽत्र विशेषः ? बुद्धिसत्ताऽऽविष्ट एवार्थः स्वीकरणीयश्चेत्, तर्हि वाक्यबोधोऽसंभवः। 'घटोऽस्ति, घटो नास्ति' इत्यत्र प्रथमे वाक्ये यदि पदार्थस्य बाह्यैव सत्ता स्वीकृता तर्ह्यस्तिग्रहणं व्यर्थम्। घटपदेन बाह्यसत्तार्थावगमे 'अस्ति' इति पदं निरर्थकं भवेत्। द्वितीये तु केवलबाह्यसत्तास्वीकाराद् घटपदं बाह्यसत्तावाचकम्, नकारस्तु तद्विरोधकः अत एकस्मिन् वाक्ये सत्ताविरोधः सिध्यति 'गुडो मधुरो न' इतिवत्। किमत्र कर्त्तव्यम् ? उच्यते नागेशभट्टेन ''मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय' अस्ति नास्ति' इति प्रयोगः'' इति वैयाकरणसिद्धान्तलघुमञ्जूषायां (पृ. २०३)।

एतन्न भवितुमर्हति, यद् वाग्व्यवहारेऽर्थसत्ता तु त्रैकालिकी (भूतभविष्यद्वर्तमानरूपा)। कूपे जलमित्युक्ते बुद्धौ सत्ता नोद्भवति, तत्र तु

पदार्थानां ज्ञानं जायते, सत्ता तु बाह्यैव । प्रथमवाक्यस्य 'घटः' इत्युक्ते काऽत्र सत्ताभीष्टा ? इत्याकारिकाऽऽकाङ्क्षोत्पद्यते । तन्निवृत्तये 'अस्ति' इति ग्रहणस्य सार्थक्यम् । "अस्तिग्रहणं सम्प्रतिसत्ताबोधार्थम्" । अतोऽत्र 'अस्ति' ग्रहणस्य प्रयोजनं साम्प्रतिकसत्ताबोधनाय, न तु बाह्यसत्ताबोधनायेति संगच्छते । द्वितीयवाक्येऽपि नकारस्य प्रयोगेण वाक्ये प्रयुक्तकालस्य निषेधो गम्यते 'नास्ति' इति पदेन सम्प्रत्तिसत्ताया निषेधः । "नास्तिप्रयोगः सम्प्रतिसत्तानिषेधार्थम्" इति संगच्छते ।

नन्वस्त्वेवम् । किञ्च, अर्थस्य बौद्धसत्ताया आनर्थक्यम्, विनष्टे 'घटे घटो नष्टः' इति प्रयोगो न स्यात् । अतीते विनष्टघटस्य प्रयोगकालेऽभावाद् इति चेत्, तदपि न विचारसहम् । शब्दश्चार्थश्च सम्बन्धश्च, तेषां समाहारः शब्दार्थसम्बंन्धं "जातिरप्राणिनाम्" (२/४/६) इति क्लीबत्वं चैकत्वं च । तस्मिन् शब्दार्थसम्बन्धे "तृतीयासप्तम्योर्बहुलम्" (२/४/८६) इत्यम्भावाभावे सिद्धे नित्ये सतीत्यभ्युपगते, अर्थवान् घटशब्दो नित्यः, अर्थवतामेव शब्दानाम् अनुशासनात् । अर्थस्वरूपज्ञानविषयतयाऽर्थस्य शब्देन सम्बन्धो नित्यः, स चेश्वरेच्छारूपः, अनादिबोधजनकयोग्यतारूपः, स्वाभाविकः, तादात्म्यम्, यो वा को वा भवतु, नाऽस्माकं तत्र चिन्ता । सम्बन्धेन नित्यत्वेन चार्थवान् घटशब्दो नित्यः, नित्यत्वे च प्रयोगकाले कार्यत्वेन रूपेणानित्यत्वात् तदीयसत्तानिषेधमात्रपरत्वाद् 'घटो विनष्टः' इति प्रयोगः संगच्छते ।

शब्दनित्यत्ववादेऽपि कार्यत्वेन रूपेण तस्यानित्यत्वस्वीकाराद् व्यवहारबलेन तादृशप्रतीतेरनुभवाच्च । इतश्च 'घटोऽस्ति', 'घटो नास्ति' इति प्रयोगौ शब्दार्थयोस्तादात्म्यतया बौद्धसत्तास्वीकारमन्तरेण न संगच्छेताम्, इत्युक्तिरपि प्रौढिवादमात्रम् । यदुच्यते 'उक्तार्थानामप्रयोगः' इति (महाभाष्ये १/३/४३) न्यायाद् अर्थस्य बाह्यसत्तामात्रस्वीकारे घटरूपस्यार्थस्य सत्ताया बाह्यजगति विद्यमानत्वाद् 'अस्ति' इति प्रयोगोऽसङ्गतः, तदेतद् बालभाषितम्, घटस्य बुद्धिसतो बाह्यसत्तानिर्धारणार्थमस्तिक्रियाप्रयोगोऽसङ्गतः । वस्तुतो बौद्धसत्तां विना बाह्यसत्तास्वीकारेणास्तिक्रियापदस्य सार्थक्यं सिध्यति । बुद्धौ घटसत्तेव पटसत्ताऽपि विद्यते । किञ्च, पटस्य बाह्यसत्ताभावे, पटोऽस्तीति न कोऽपि प्रयुङ्क्ते । पदार्थस्य बाह्यसत्ताम् उपजीव्य बुद्धावागतान् वाचकशब्दैर्बोधयन्ति लोकाः । उपजीव्यत्वाद् बाह्यसत्ताया एव प्राधान्यम्, अतः 'घटोऽस्ति' इति प्रयुञ्जानो वर्तमानकालिकघटनिष्ठसत्तां

बोधयत्यस्तिक्रियापदेन । एवञ्च "उक्तार्थानामप्रयोगः" इति (महाभाष्ये १/३/४३) न्यायस्य प्रवेशलेशोऽपि नात्रास्ति ।

वस्तुतस्तु, इत्थमत्रावधेयम्- 'घटः' इत्यत्र घटविषयकज्ञानं सप्रकारकमर्थो वाच्यः । एवमेव घकाराद्यानुपूर्वीघटितशब्दविषयकं ज्ञानं घटत्वप्रकारकम्, वाचकम्पदमिति व्यवह्रियते । अत्रार्थविषयाकारकं ज्ञानमर्थत्वेन रूपेण शब्दविषयकज्ञानाद्भिन्नम् । एवमेव वाचकपदविषयाकारकं ज्ञानं च वाचकपदत्वेन रूपेण (वर्णानुपूर्वीघटितरूपत्वेन) अर्थाकारकज्ञानाद्भिन्नम् । किञ्च, ज्ञानत्वेन रूपेण समानाधिकरणतयोभयोरप्यभिन्नत्वम् । एवं हि सामानाधिकरण्येन भेदाभेदघटितं शब्दार्थयोस्तादात्म्यं तत्तज्ज्ञानविषयतया सिध्यति । तदेव तादात्म्यं शक्तिः सम्बन्धस्य शक्तिभिन्नत्वं वदतां मतेऽपि नास्ति कश्चिद्दोष इत्यग्रे वक्ष्यामः । एवं तादात्म्यस्वरूपस्वीकारे शब्दार्थयोर्बौद्धसत्ताऽऽवश्यकतैव नोदेति ।

नन्वेवं 'सविषयकं ज्ञानं विषयसत्तासापेक्षम्' इति नियमेन सविषयकज्ञानस्य विषयसत्तासापेक्षत्वाद् घटपदार्थानभिज्ञः सन्निहितं चक्षुरिन्द्रियसंयुक्तं घटपदार्थं पश्यन्नपि तमजानन्नाप्तं पृच्छति- 'कोऽयं पदार्थः' इति ? किञ्च, तत्रार्थविषयकज्ञानस्यार्थसान्निध्याद् उद्बोधो भवेत् । किञ्च, तद्वाचकपदस्य तत्रासन्निधानात् तद्वाचकपदविषयकज्ञानानुदयात् कथं स घटः इत्युत्तरयति, इत्यपि न वाच्यम्, शब्दार्थयोस्तादात्म्यशक्तिग्रहवतां भेदसहिष्ण्वभेदरूपतादात्म्यसम्बन्धमहिम्नैवासन्निहितस्यापि वाचकपदविषयकज्ञानस्यापि स्वीकारात् । एवमेवासन्निहितेऽपि घटपदार्थे 'घटमानय' इत्युक्तिमात्रेणैव घटशब्दसन्निधिमात्रेणैव घटशब्दे तादृशतादात्म्यसम्बन्धेन घटशक्तिग्रहवतां प्रयोज्यस्यासन्निहतस्याप्यर्थस्योक्तार्थविषयकं ज्ञानं जायत एवेत्यपक्षपातया धिया शब्दार्थयोर्बौद्धसत्तास्वीकारे दुराग्रहस्त्याज्य एव । न चाप्येवं 'घटः' इत्युक्ते सन्निहिते घटरूपेऽर्थे तत्समवेतस्याकाशस्यापि बोधो जायताम्, इत्यपि वाच्यम्, घटत्वप्रकारकघटविशेष्यकपदार्थमात्रस्यैव घटपदवाच्यत्वात्, घटपदार्थनिष्ठायाः पृथुबुध्नोदराकारायाः प्रकारताया एव तत्राभ्युपगमाच्च । शब्दार्थयोर्बौद्धसत्तास्वीकाराभावे 'घटोऽस्ति' इत्यत्र बाह्यसत्ता घटेन सह "उक्तार्थानामप्रयोगः" इति न्यायात् 'अस्ति' इति क्रियापदप्रयोगाऽसङ्गतिरित्यतः शब्दार्थयोर्बौद्धसत्तास्वीकार आवश्यकः । तथा च बौद्धसत्ताविशिष्टघटस्य बाह्यसत्तां बोधयितुम् 'अस्ति' इति चेत्, न, अत्र

पृच्छ्यते पण्डितमानी ! "उच्चारितशब्दोऽर्थं गमयति नानुच्चारितः"। घट इति शब्दो द्रव्यं क्रिया वा ? "पदार्थः सत्तां न व्यभिचरति" (महाभाष्ये ५/२/९४) पदार्थत्वसामान्यस्य सत्ताबोधकः पदार्थविशेषस्य वा स्वसमानाधिकरणसत्ताबोधको द्रव्यं घटशब्दोऽत्रेति चेत्, तर्हि स्वाश्रितसत्तानुकूलक्रियाबोधाय 'अस्ति' इति क्रियापदप्रयोगः शब्दार्थयोर्बाह्यसत्तास्वीकारेऽपि सङ्गच्छत एव। घटद्रव्यं भावपदार्थान्तर्गतं स्वकीयमभावपदार्थत्वं व्यावर्तयति। एवं तावद् घटस्य बाह्यसत्ता घटोऽस्ति इत्यत्र गम्यत उच्चारितघटपदेन। अभावव्यावर्त्तकं भावरूपं घटद्रव्यम्। किञ्च, तद् वर्तमानकालिकसत्ताक्रियाश्रयमित्यर्थबोधाय तु शब्दार्थयोर्बाह्यसत्तास्वीकारेऽपि अस्ति इति क्रियापदप्रयोगस्याऽऽवश्यकता भवत्येव। सत्तानुकूलव्यापारार्थकक्रियापदप्रयोगं विना केवलं 'घट' इत्युक्ते सत्तानुकूलव्यापाराश्रयत्वं घटपदस्य प्रयत्नसहस्रैरपि त्वया साधयितुं न शक्यते। अपि च "क्रियान्वयित्वं कारकत्वम्" इति त्वन्मतेऽपि 'अस्ति' इत्युक्तक्रियापदाध्याहारं विना तत्प्रयोगं विना वा कथं घटपदस्य कारकत्वं स्यात् ? किञ्च, कारकत्वाभावे नामार्थत्वाभावे वा तत्र कथं प्रथमा स्यात् ? अतः शब्दार्थयोर्बाह्यसत्तास्वीकारोऽपि 'घटोऽस्ति' इत्यत्र अस्तिक्रियापदप्रयोगः शास्त्रीयत्वात् सुतरां जाघटीति।

एवमेव 'घटो नास्ति' इत्यत्रापि बाह्यघटस्यासत्त्वेऽपि बुद्धौ सतो घटस्य बाह्यसत्तां वारयितुं 'घटो नास्ति' इति प्रयोक्तुं शक्यते। बौद्धसत्तास्वीकाराभावे बाह्यस्य घटस्याभावे पूर्वसिद्धेऽपि 'घटो नास्ति' इति प्रयोगोऽसङ्गत इत्यपि न वाच्यम्, तत्तद्देशाधिकरणकतत्तत्कालिकघटकर्त्तृकसत्तायां संदिहानं भ्रमज्ञानं वा बोधयितुं शब्दार्थयोर्बाह्यसत्तास्वीकारोऽपि 'घटो नास्ति' इति प्रयोक्तुं सुशक्यत्वाद् असन्निहितयोरपि बाह्यसतोर्विषययोर्विषयताज्ञानं तादृशज्ञाने च यथार्थज्ञानसामग्र्यभावे तत्र भ्रमसंशयौ भवत इति नियमः प्रमाणसहस्रेणाऽप्यपलपितुमशक्यः।

अन्यथा रज्जौ बाह्यसतोऽनुभूतस्य सन्निहितस्याऽपि सर्पस्य विषयताभानमेव न स्यात्। न च बुद्धौ सतः सन्निहितस्य बाह्यासन्निहितस्यापि सर्पस्य तज्ज्ञानम् इत्यपि न वाच्यम्, बुद्धौ सर्वेषां पदार्थानां सत्ता समाना भवति, बौद्धसत्तास्वीकारपक्षे तर्हि सर्पस्यैव भानं कथं संगच्छेत् ? सादृश्याद इति चेत्, तदपि न, रज्जुसर्पयोर्बौद्धसत्ताकयोः सादृश्ये किम्मानम् ? तथा च

बौद्धसता किं बाह्यसत्तासापेक्षा निरपेक्षा वा ? बाह्यसत्ता निरपेक्षेति चेत्, तर्हि बाह्यव्यवहारासिद्धिः । गगनकुसुमस्यापि यथार्थतापत्तिः । बाह्यसत्तासापेक्षेति चेत्, निग्रहस्थाने निपतितोऽसि । बाह्यसत्तयैव व्यवहारनिर्वाहे, कृतं बौद्धसत्तास्वीकारेण, ''बौद्धसत्ता अपास्ता'' इत्याकूतम् ।

ननु बुद्धिनिष्ठा सत्ता चेत् तर्हि विद्यमानस्य ज्ञानस्य सम्प्रतिसत्तामात्रं भविष्यति । तत्तु 'घटविषयकज्ञानमस्ति' इत्यस्माद् वाक्याज्ज्ञायते, न हि 'घटोऽस्ति' इति वाक्यात् । यदा तु दशरथविषयकज्ञानं भवति, न तु तदा दशरथोऽपि भवति । 'चैत्रोऽगच्छत्' इत्युक्ते चैत्रकर्त्तृकगमनव्यापारस्य भूतसत्ता ज्ञायते, न चैत्रस्य सम्प्रतिसत्ता, न तु गमनस्य । परञ्च 'चैत्रोऽगच्छत्' इति वाक्यश्रवणेन सञ्जातः शाब्दबोधस्तु साम्प्रतिको न तु विषयः । बोधे यदा सम्प्रत्तिसत्ता तदा विषये भूतसत्ता भविष्यत्सत्ता सम्प्रतिसत्ता वा भवितुमर्हति । 'त्रैकाल्यं खल्वपि लोके लक्ष्यते' इति महाभाष्यकारसिद्धान्तः । प्रत्यक्षप्रमाया विषयः सम्प्रतिसत्तावानेव भवितुमर्हति । न च प्रत्यक्षं भूतसत्तावन्तमनागतसत्तावन्तं वा विषयीकर्त्तुं शक्नोति । अनुमितिः शाब्दबोधश्चातीतानागतसम्प्रतिसत्तावतः पदार्थान् विषयीकर्त्तुं शक्नुत इति सर्वलोकप्रतीतिः ।

## ४. बौद्धार्थवादिमते घटोऽस्ति, घटो नास्तीति प्रयोगोऽनुपपन्नः

वस्तुतः पदबोध्यो बौद्धसत्ताविशिष्ट एवेति वादिनामेव 'घटोऽस्ति, घटो नास्ति' इति प्रयोगोऽनुपपन्नः । अत्र सुब्रह्मण्यशास्त्रिचरणास्तु ''अस्तिपदमपि बौद्धसत्तामेव बोधयेत्, न बाह्यसत्ताम् । पदत्वाविशेषात् । एवञ्च घटपदेनैव तन्निष्ठबुद्धिसत्ताया बोधितत्वात् । उक्तार्थानामप्रयोगः, इति न्यायेनास्तिपदप्रयोगोऽनर्थकः । एवं 'घटो नास्ति' इत्यत्रापि घटे बौद्धसत्ताभावो बोधनीयः । स चाभावो घटपदबोध्यबौद्धसत्ताविरोधी । नास्तिपदेन बाह्यसत्ताभावो न बोधयितुं शक्यते । सर्वपदानां बौद्ध एवार्थः शक्य इत्यङ्गीकाराद्'' इति शाब्दतरङ्गिण्यां (पृ.८८-८९) प्रतिपादयन्ति । अतोऽर्थो बाह्य एवेति स्वीकार्यम् ।

## ५. शाङ्करभाष्येण बौद्धार्थस्य खण्डनम्

ननु नागेशेन स्वप्नभ्रममृगतृष्णागन्धर्वनगरादिप्रत्ययज्ञानेन बाह्योऽर्थः प्रत्याख्यातः, इह बुद्धिसत्ताविष्ट एवार्थः स्वीकरणीय इति तेषां परमाशयः। अस्मिन् केवलबौद्धार्थवादे बुद्ध्यारूढेण रूपेणान्तःस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते। सत्यपि बाह्येऽर्थे बुद्ध्यारोह्यन्तरेण प्रमाणादिव्यवहारो न सम्भवति। एवञ्चानुभवमात्रेण साधारणजनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः, स्तम्भज्ञानं पटज्ञानं घटज्ञानमिति, तेन ज्ञानस्य विषयसारूप्यं स्वीकर्त्तव्यम्। स्वीकृते च विषयाकारज्ञाने बाह्यार्थकल्पनाऽपि व्यर्था। अपि च सहोपलम्भनियमादभेदो विषयज्ञानयोरापतति। न चानयोरेकस्यानुपलम्भ इतरस्योपलम्भोऽस्ति। न चैतत्स्वभावविवेके युक्तं प्रतिबन्धकारणाभावात्। अतो बाह्यार्थाभावः। स्वप्नादिवद् द्रष्टव्यमिदम्। स्वप्ने, मृगतृष्णायां, गन्धर्वनगरे, भ्रमे, रोगे, मदाद्यवस्थासु च बाह्यार्थाभावेऽपि विनैव बाह्येनार्थेनैषां प्रत्यया बौद्धसत्तया बौद्धाकारा भवन्ति। एवं जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीति गम्यते ज्ञानत्वस्याविशेषात्। कथं बाह्यार्थे सति ज्ञानवैचित्र्यमुपजायते, वासनावैचित्र्यात्। अनादिसंसारे बीजाङ्कुरवज्ज्ञानानां वासनानां चान्योऽन्यनिमित्तनैमित्तिकभावेन ज्ञानवैचित्र्यं न निषिध्यते। तथा चान्वयव्यतिरेकाभ्यां बुद्धिवासनानिमित्तमेव ज्ञानवैचित्र्यं सिध्यति। स्वप्नादिष्वपि बाह्यार्थमन्तरेण बुद्धिवासनानिमित्तस्य ज्ञानमिति सर्वैरङ्गीकृतत्वाद् बाह्यस्यार्थस्याभाव इति सिद्धम्।

किञ्च, मतमिदं विज्ञानवादवद्दूष्यम्। यद्यपि भट्टनागेशः पदे पदे वेदान्तसूत्रभाष्यादिद्वारा स्वमतं समर्थयामास परिपोषयामास वा। किन्तु वेदान्तसूत्रभाष्यादीनामवलोकनेन निश्चीयते न केवलबौद्धार्थवादो वेदान्तग्रन्थेष्वस्वीकृतः, अपि च पदे-पदे बौद्धार्थवादस्य सौगतसम्मतत्वात् प्रत्याख्यानमेव कृतम्। पूर्वोक्ततर्काणां खण्डनं शाङ्करभाष्ये समुपलभ्यते। व्यवहारकाले तु जगत् सत्यम्। पारमार्थिके त्वसत्यम्। परञ्च व्यवहारदशायां जगदिदं वास्तविकमेव बाह्यसत्तायाः सिद्धत्वात्। केवलबौद्धार्थवादस्य खण्डनं भगवत्पादैः शङ्करैःबहुरम्ययुक्तिभिः कृतम्– "नाभाव उपलब्धेः" इति व्याससूत्रमभावाधिकरणे (२/२/२८) पठितम्। न खलु बाह्यस्यार्थस्याभावोऽध्यवसातुं शक्यते। कस्मात्? उपलब्धेः। प्राप्यते हि प्रतिप्रत्ययं

बाह्योऽर्थः, स्तम्भो घटः पट इति । न हि समुपलब्धस्याभावो भवितुमर्हतीति सूत्राशयः । अत्र शङ्करपादास्तु-"यथा हि कश्चिद् भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुञ्जे, न वा तृप्यामीति, तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं नाहमुपलभे, न च सोऽस्तीति ब्रूवन्कथमुपादेयवचनः स्यात् । ननु नाहमेवं ब्रवीमि न कञ्चिदर्थमुपलभ इति, किं तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि । बाढमेव ब्रवीषि निरङ्कुशत्वात्ते तुण्डस्य, न तु युक्त्युपेतं ब्रवीमि । यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्य उपलब्धेरेव । न हि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभ्यते, उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् लौकिका उपलभन्ते" इति प्रतिपादयाञ्चक्रुः ।

तस्माद् विचारणीयमेतच्छाङ्करभाष्यं बौद्धार्थवादिभिः । अत एव सर्वे लौकिका जना बाह्यार्थमेव समुपलभन्ते, यत्प्रत्याचक्षाणा अपि बाह्यार्थमेव व्याचक्षते, तदन्तर्ज्ञेयं रूपं चितस्थं तद्बहिर्वदवभासते, इत्यपि न युक्तिसहम् । अतः पुनर्वक्ष्यति भगवत्पादः– "तेऽपि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति, इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः । न हि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तुं न तु बहिर्वदवभासते" इति (तत्रैव २/२/२८) ।

एवञ्च सर्वत्र शास्त्रव्यवहारे, आहोस्विद् लोकव्यवहारे यत् प्रत्यक्षदीनामन्यतमेनाऽपि प्रमाणेन प्राप्यते तत्स्वीक्रियते, यत्तु केनचिदपि प्रमाणेन न सिध्यति, तन्नाङ्गीक्रियते, अनेनानलभ्यः शब्दार्थ इति व्युत्पत्तिभङ्गो नाऽशङ्क्य विषयभेदात् । अत्र तु सर्वैरेव प्रमाणैः सिद्धः बाह्योऽर्थो नेति कथनं कथं संगच्छेत । बाह्यार्थस्योपलब्धौ सत्याम्, स व्यतिरेकाव्यतिरेकादिविकल्पैर्न सम्भवतीत्यपि न वाच्यम् । न च ज्ञानस्य विषयसारूप्याद् विषयनाशो भवति । असति विषये, ज्ञाने विषयसारूप्यतानुपपत्तिः, अतो विषयाकारज्ञानस्य विषय एव हेतुरिति सम्पद्यते । विषयाभावे तदाकारज्ञानमपि न सम्भवति । विषयस्योपलब्धिर्बहिरेव, तस्मान्न विषयो बौद्धो भवितुमर्हति । अतो ज्ञानविषययोर्भेदोऽनुभवसिद्धः । तस्मात् सहोपलम्भनियमोऽपि ज्ञानविषययो-रुपायोपेयभावहेतुको न त्वभेदहेतुक इति स्वीकर्त्तव्यम् । तेन बाह्यार्थस्य विषयस्य (बौद्धज्ञानस्य) च भेदः स्पष्टीभवति । बुद्धौ ज्ञानं न वस्त्वर्थः । अर्थे

ज्ञाने च महान् भेदः । उक्तञ्च यथा भगवच्छङ्करपादैः– ''अपि च घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो न विशेष्यस्य ज्ञानस्य । यथा शुक्लो गौः, कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य, द्वाभ्याञ्च भेद एकस्यैव सिद्धो भवत्येकस्माच्च द्वयोस्तस्मादर्थज्ञानयोर्भेदः । तथा घटदर्शनं घटस्मरणम्, इत्यत्रापि प्रतिपत्तव्यम् । अत्रापि हि विशेष्योरेव दर्शनस्मरणयोर्भेदो न विशेषणस्य घटस्य । यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वद्'' इति तत्रैव (२/२/२८) । अतः सिद्धो ज्ञानविषययोर्भेदः । किञ्च बौद्धोऽर्थो बौद्ध एवार्थ; इत्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यं, घटः पट इत्येवं जातीयकः कस्मान् नाभ्युपगम्यत इति वक्तव्यम् ।

विप्र पृथ्व्यादि चित्तस्थं न बहिस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥

इत्यादिना स्वप्नाद्यवस्थासु बौद्धोऽर्थोऽनुभूयत इति निरूपितं मञ्जूषायां (पृ. ३०९) । तर्हि बाह्योऽप्यर्थः सर्वावस्थासु सर्वैरनुभूयते इति तं कथमनङ्गीकुर्वन्ति बौद्धार्थवादिनः ।

अथ विज्ञानं प्रकाशात्मकत्वात्प्रदीपवत्स्वयमेवानुभूयते । यथा मञ्जूषायां (पृ.३०९) भट्टनागेशेनोक्तम् -''यथा च प्रदीपो रूपादिकं प्रकाशयन्नात्मानमपि प्रकाशयति, एवं ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति, एवं शब्दोऽपि, ज्ञानशब्दप्रदीपानां त्रयाणामपि स्वप्रकाशत्वात्'' इति । अस्यापि तर्कस्य सुविवेचनं विहितं भगवत्पादैः यतो हि ''अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छसि, अग्निरात्मानं दहतीतिवद्, अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छस्यहो पाण्डित्यं महद्दर्शितम् । न चार्थाव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते स्वात्मनि क्रियाविरोधादेव'' इति भाष्ये (२/२/२८) । एवं चान्यत् प्रदीपवज्ज्ञानम् प्रकाशकान्तरनिरपेक्षं स्वयं प्रकाशत इति ब्रुवता प्रमाणेनागम्यं, अनवगन्तृकं ज्ञानमित्युक्तं स्यात् । तर्हि प्रमाणप्रमातृरहितं ज्ञानं शिलाघनमध्य-स्थप्रदीपसहस्रप्रकाशतुल्यमसदेव भवति । बाह्यार्थापलापिना बौद्धार्थवादिना स्वप्नादिज्ञानवज्जागरितगोचरा घटपटादयः पदार्थाः, बाह्यार्थं विनाऽपि ''प्रत्ययत्वाविशेषात्'' इति नियमाद् बौद्धा भवेयुः, इत्युक्तं, तन्न युक्तम् । अत्र तु व्याससूत्रमेव प्रमाणत्वेन उच्यते''वैधर्म्याच्च न स्वप्नादिवत्'' इति

(२/२/२९)। न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति । कस्मात् ? वैधर्म्यात् । स्वप्नजागरितयोर्वैधर्म्यं विद्यते, बाधाबाधरूपम्, इति सूत्राशयः । स्वप्नप्राप्तं वस्तु बाध्यते, यथा प्रतिबुद्धस्य मृषा मया प्राप्तः राजपदसमागमः, इति न हि मम राजपदप्राप्तिरस्ति, निद्रायां तु मे मनो बभूव तेनैषा भ्रान्तिरुद्बभूवेति । एवं मृगतृष्णायां भ्रमे रोगे मदादिषु च यथायथं बाधो भवत्येव । न च, एवमेव जागरितावस्थोपलब्धा घटपटादयः पदार्थाः कस्याञ्चिदप्यवस्थायां बाध्यन्ते । अपि च जागृतिस्वप्नयोरपि महान् भेदः, यत्र स्वप्नदर्शनं तत्स्मृतिरेषा, जागरितदर्शनन्तूपलब्धिः, स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं सर्वैरनुभूयते । देवं स्मरामि नोपलभे, उपलब्धुमिच्छामीति । एवमेव प्रतिपादितमाचार्यशङ्करपादैः- "तत्रैवं सति न शक्यते वक्तुं मिथ्या जागरितोपलब्धिरुपलब्धित्वात् स्वप्नोपलब्धिवद् इत्युभयोरन्तरं स्वयमनुभवता । न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्त्तुम् । ...दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः" इति (२/२/२९) ।

यद् बौद्धार्थवादिभिरुक्तं विनापि बाह्यार्थेन ज्ञानवैचित्र्यं वासना-वैचित्र्यादेवावकल्प्यते । तत्प्रत्याख्यानेऽपि व्याससूत्रं वर्तत एव—"न भावो-ऽनुपलब्धेः" इति (२/२/३०) । न भावो वासनानामुपपद्यते इति सूत्राशयः । अत्र तु शाङ्करभाष्यम् -"त्वत्पक्षेऽनुपलब्धेबाह्यानामर्थानाम् । अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति, अनुपलभ्यमानेषु किंनिमित्ता विचित्रा वासना भवेयुः, अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यान्नाभिप्रायसिद्धिः" इति । अस्याशयस्तु, बीजाद् अङ्कुरोत्पत्तिर्दृश्यते, तस्माददृष्टबीजाङ्कुरेष्वपि कार्यकारणभावकल्पना सम्भवति । अत्र तु उपलब्धिं विनाऽर्थज्ञानरहितानां न वासनोत्पत्तिरिति, तस्मादुपलब्धिनिरपेक्षा वासना सर्वथा कल्पिता भवति । तस्यां ज्ञानगतवैचित्र्यमसम्भवमिति सिध्यति । वासनाया बाह्यार्थानुभवजन्यत्वे सिद्धे स्वप्नादिदृष्टान्तः प्रत्याख्यातो भवति । कारणं हि बाह्यार्थोपलब्धिं विना वासनोत्पत्तिरसंभवा । अपि च वासना नाम संस्कारविशेषाः । संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते यथा लोके दृश्यते । अतो वासनाश्रयो बौद्धार्थो नेति सिद्धम् । वेदान्ते मायावच्छिन्नं ब्रह्म बाह्याभ्यन्तरजगतः कारणम् । तथा च जगत् कारणरूपेण सत् स्वरूपेणाऽसत्, तदपि व्यवहारे बाह्यार्थस्योपलब्ध्या बहिः स्थिरमिति । यथोक्तम्-

'अबाधात्स्वप्नवैषम्यं बाह्यार्थस्तूपलभ्यते।

बहिर्वदिति तेप्युक्तिर्नातो धीरर्थरूपभाक्॥

इति ब्रह्मसूत्रेऽभावाधिकरणे (पृ. ४९८)

अतो बौद्धार्थोऽसिद्ध इति स्वीकर्त्तव्यम् ।

## ६. योगसूत्रेण बौद्धार्थस्य साधनं तत्खण्डनञ्च

भट्टनागेशेन पातञ्जलयोगसूत्रप्रमाणेन बौद्धार्थः साधितः । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति योगसूत्रम् । शब्दजन्यज्ञानान्तरं वस्तुतत्त्वमनपेक्ष्य बुद्धावनुपतनशीलोऽध्यवसायो विकल्प इति । अस्याशयं विवृण्वन् नागेशो लिलेख-''वस्तुतस्तत्र विकल्पात्मकमेव ज्ञानम् । शब्दज्ञानजन्यो बाह्यवस्तुशून्यो विकल्प इति तदर्थः । किञ्च शब्दप्रयोगं तज्जन्यज्ञानं चानुपतति, तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण सदैव जायमानो विकल्प इत्यर्थः । अनेन वक्तुः शब्दप्रयोगजनकमानसज्ञानस्यापि विकल्पत्वमुक्तम् । विपर्यये तु बाधोत्तरं शब्दप्रत्यययोरभावान्न तेन गतार्थता'' इति वैयाकरणसिद्धान्तलघुमञ्जूषायाम् (पृ. ३५८)।

एवमेव परमलघुमञ्जूषायां (पृ.४३)-'' शब्दज्ञानमात्रेणानुपातीबुद्धावनुपतनशीलो वस्तुशून्यो विशेषेण कल्प्यत इति विकल्पो बुद्धिपरिकल्पित इत्यर्थः'' । अस्मिन् विकल्पसूत्रे योऽर्थो वर्णितः स बौद्ध एव बुद्धावनुपतनशीलत्वाद् बुद्धिपरिकल्पितत्वाद् बाह्यार्थरहितत्वाच्च । सूत्रमिदं बौद्धार्थं समर्थयति । इह नागेशविवेचनं समीचीनं न भाति । अत एवास्य नागेशमतस्य प्रत्याख्यानं डॉ. हर्षनाथमिश्रमहाभागैः स्वनिबन्धे सम्यकृतया कृतम् । विकल्पसूत्रेण यस्य कल्पितस्यार्थस्य सत्ता स्वीकृता तस्य कल्पनाकल्पितत्वादवास्तविकत्वमेव । अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा कल्पितस्यार्थस्य न मुख्यत्वं गौणत्वमेव ।

### (अ) विकल्पसूत्रप्रतिपादिततत्त्वस्याप्रामाण्यम्

विकल्पसूत्रप्रतिपादिततत्त्वस्याप्रामाण्यमपि तत्रैव स्वीकृतम् । अत एव तत्र 'प्रथमसूत्रेण 'प्रत्यक्षानुमानागमाः प्रमाणानि' इत्यनेन प्रमाणानां विश्लेषणं

विधाय, तेषाञ्चाक्लिष्टक्लिष्टरूपं भेदद्वयं दर्शयित्वा अष्टमनवमसूत्राभ्यां विपर्ययविकल्पवृत्त्योर्लक्षणे लिख्येते । 'विपर्ययो मिथ्याज्ञानमतद्रूपमप्रतिष्ठम्' अर्थाद् अतस्मिन् तज्ज्ञानं विपर्ययः यथा-शुक्तौ रजतज्ञानम् । विकल्पस्तु शब्दज्ञानुपाती वस्तुशून्यो भवति, यस्य ज्ञानस्य विषयो वास्तविको न भवति, किन्तु केवलशब्दसमर्पितत्वात् काल्पनिको भवति, तज्ज्ञानं विकल्प उच्यते । अस्य च विकल्पस्याप्रामाण्यं तत्त्ववैशारद्यां (१/९) स्पष्टमेवोक्तम् -"क्वचिदभेदे भेदमारोपयति, यथा पुरुषस्य चैतन्यमित्यादौ, पुरुषचैतन्ययोरभेदेऽपि षष्ठ्या भेदारोपः । क्वचिच्च भिन्नानामभेदारोपं करोति । यथा अयो दहति, अयसो दाहकस्याग्नेश्च भेदेऽप्यभेदारोपः । ततोऽभेदस्याभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणम्" इत्यादिना ग्रन्थेन । इत्थं विकल्पस्याप्रामाण्यसूचकेन सूत्रेण यस्य बौद्धार्थस्य सार्वत्रिकी सत्ता साधिता, तस्या अप्रामाण्यं सुतरां सिध्यति । किञ्च, तत्त्ववैशारद्यां द्विविध एवारोपो दर्शितः, भेदेऽभेदारोपः, अभेदे च भेदारोपः । इदं चारोपद्वयमतिशयोकृत्याद्यलङ्कारप्रयोगे लाक्षणिकतया लोके संसिद्धमेव । तस्यारोपद्वयस्योपलक्षणतयान्यारोपाणां विकल्पत्वस्वीकारेऽपि न कश्चिद् नवीनो बौद्धार्थः प्रसिध्यति । बौद्धार्थपदवाच्यस्यार्थस्य लक्ष्यव्यङ्ग्यार्थयोरनुमेयेऽर्थे वा समावेशात्" । अतो नागेशेन योगसूत्रस्य कदर्थनं कृतमिति सिध्यति । तथा च शशशृङ्गादिपदेषु विकल्पत्वं नास्तीति योगदर्शनटिप्पण्यां स्पष्टमुक्तम् ।

एवमेव तत्रोच्यते हरिहरानन्दारण्येन स्वकीये भाष्ये (सू १/९, पृ. २१) "स (विकल्पो) न प्रमाणोपारोही न विपर्ययापारोही च वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते, तद्यथा - चैतन्यं पुरुषस्य स्वरूपमिति । यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते ? भवति च व्यपदेशे वृत्तिर्यथा, 'चैत्रस्य गौरिति' । तथा प्रतिषिद्धवस्तु धर्मो निष्क्रियः पुरुषः, तिष्ठति बाणः, स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते, तथा अनुत्पत्तिधर्मा पुरुष इति, उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः, तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहारः" इति ।

अयं भावः विकल्पो न प्रमाणेऽन्तर्भवति न वा विपर्यये । वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्येन व्यवहृतत्वात् । यथा 'पुरुषस्य चैतन्यम्' इति विकल्पोदाहरणम् । यदा चितिरेव पुरुषः तदा च किं विशेष्यं केन व्यपदिश्यते ?

यथा 'चैत्रस्य गौः 'इत्यत्र चैत्रस्य गोश्च भेदात्तथा व्यपदेश उचितस्तथा न पुरुषस्य चैतन्यमित्यत्र । विकल्पोऽयं त्रिविधः–वस्तुविकल्पः, क्रियाविकल्पोऽभावविकल्पश्च । पुरुषस्य चैतन्यम्, इत्यत्र पुरुषचैतन्ययोरभेदेऽपि भेदव्यवहारात् प्रथमस्योदाहरणम् । यत्राकर्ता व्यवहारसिद्धये कर्त्तेव प्रयुज्यते, तत्र द्वितीयो विकल्पः । यथा-बाणस्तिष्ठति । बाणे वस्तुतो गतिनिवृत्त्यनुकूलो व्यापारो नास्ति, तथापि तादृशव्यवहारात्तत्र द्वितीयो विकल्पः । पुरुष उत्पतिधर्मशून्य इत्यभावविकल्पस्योदाहरणम् । शून्यताऽभावपदार्थः । अभावपदार्थेन कस्यापि भावपदार्थस्य स्वरूपोपलब्धिर्न भवति । 'शशशृङ्गम्, आकाशकुसुमम्' इत्यादिकं तु न विकल्पोदाहरणं भवितुमर्हति । यतो हि विकल्पस्य विषयोऽवस्तु भवति । यथा राहोः शिरः अत्र यः राहुः स एव शिरस्तदोभौ पृथक्कृतौ मानसप्रत्यक्षविषयतां बाह्यप्रत्यक्षविषयतां वा कथं गृह्णीताम्, अत्र सम्बन्धोऽपि मिथ्यास्ति । तथा बाणस्तिष्ठतीत्यत्र बाणे 'वा' गतिगन्धनयोरिति निष्पन्ने गतिनिवृत्त्यनुकूलव्यापाराश्रयरूपकर्तृत्वं वस्तुतो नास्ति । तथैवाभावार्थकपदवाक्ये पुरुष उत्पत्तिधर्मशून्य इत्यादौ शून्यताया अभावपदार्थरूपाया उल्लेखादभावविकल्परूपा चित्तवृत्तिर्मन्यते । शशशृङ्गं तु न पूर्वोक्तोदाहरणत्रयसाम्यं भजते । शशकस्य शृङ्गं न भवति, तस्य मस्तके शृङ्गयोगं विधायासम्भवरूपार्थप्रत्यायनाय यो मानसप्रत्यक्षात्मकबौद्धार्थः स्वीक्रियते स तु कल्पना प्रसूतादर्थान्नातिरिच्यते । शशकस्य शृङ्गमित्यत्र योऽवयवावयविभावः सम्बन्ध कल्प्यते स तु द्वयोर्वस्तुनोर्वर्तते, अतो नात्र विकल्पः स्वीकर्तुं शक्यते, विकल्पसूत्रस्य भाष्यस्वारस्याभावात् । स सम्बन्धो मिथ्या वर्तते । एतादृशशब्दप्रयोक्ताऽपि तस्यालीकत्वप्रदर्शनायासम्भवातिशयद्योतनाय च तथा वदति, न व्यवहारसिद्धये । यः स्वयं सुतरां च मिथ्यास्ति तस्य मिथ्यात्वकथनं न विकल्पोदाहरणं भवितुमर्हतीति पातञ्जलयोगसूत्रस्य टिप्पणेर्भाष्यस्य च सारः (पृ. २१-२३) समाकलनीयः ।

एवमेव नागेशतर्कं समालोचयन् संस्कृतविमर्शाख्यपत्रिकायां, डॉ. हर्षनाथमिश्रः प्रतिपादयति- ''नागेशेन विशेषेण कल्प्यत इति विकल्पो बुद्धिपरिकल्पित इति तदर्थमिति लिखित्वा विकल्पपदं यौगिकं स्वीकृतम्, तदपि न युज्यते, लक्षणं यस्य क्रियते तत्पदं यौगिकं न भवति । किन्तु योगरूढमेव भवतीति । अन्यथा योगार्थेनैव निर्वाहे लक्षणकरणप्रयासो व्यर्थ एव स्यात् । यदि विकल्पपदं यौगिक तदा सर्वे कल्पनाप्रसूता अर्था बौद्धार्था भवन्तु विकल्पपदवाच्याः । इत्थमयं बौद्धार्थः कविकल्पिताद-

र्थान्नातिरिक्तोऽलङ्कारशास्त्रवर्णितत्वान्न नवीनः । सर्वेषां शब्दानाञ्च बौद्धार्थ एवेति मतं तु न युक्तम्, अभिधेयार्थस्य सङ्केतसिद्धस्य लोकवेद-शास्त्रादिसिद्धस्यापलापार्नहत्वाद्" इति 'केवलो बौद्धार्थो न शब्दप्रतिपाद्यः' इति निबन्धे (पृ १४-१५) ।

इदमत्रावधेयम् । नागेशेन बौद्धार्थसाधनेऽन्येषां शास्त्रकर्त्तृणां युक्तीनामन्यथा व्याख्यानं कृत्वैवातिविस्तृतं बौद्धार्थनिरूपणं निरूपितम् । तथात्राप्यन्यथा व्याख्यानं तु स्पष्टीकृतमेव ।

## ७. बौद्धार्थस्य न्यायसूत्रदृष्ट्या समर्थनं तत्समीक्षा च

असत्कार्यवादनिरूपणावसरे "बुद्धिसिद्धं तु तदसत्" इति (न्यायसूत्रम् ४/१/५०) । अतो न्यायसूत्रकर्त्तुः गौतमस्यापि सम्मतो बौद्धार्थ इति मञ्जूषायां (पृ.२०४) नागेशो लिलेख । कर्त्तृत्वं कार्यनियतपूर्ववृत्तित्वरूपकारणत्वव्याप्यम् । उत्पत्तेः प्रागसच्च कार्यं कथमुत्पत्तिकर्त्तृ भवेत्, तत्त्वाभावे च घटो जायत इति कर्त्राख्यातप्रयोगः कथमुपपद्यत इत्याशङ्कापरिहाराय तत्सूत्रं प्रवृत्तम् । ततः कार्यमुत्पत्तेः प्राङ्नाशोत्तरञ्चासदपि बुद्धिविषयतया सिद्धमिति सूत्रार्थः । बौद्धस्य घटस्य पूर्ववृत्तित्वात् कर्तृत्वमुपपद्यत इति परिहाराशयः । अत्र नागेशेन प्रतिपादितं- 'सूत्रेणानेन सिध्यति नैयायिकानामपि बौद्धार्थेऽभिरुचिः' ।

समीक्षा- अस्य सूत्रस्य पूर्वापरसन्दर्भपर्यालोचनया, भाष्यतात्पर्यटीकादिपर्यालोचनया चान्यादृशार्थे तात्पर्यं दृश्यते । अतोऽस्मिन्प्रसङ्गे पण्डितराजसुब्रह्मण्यशास्त्रिणा शाब्दतरङ्गिण्यां (पृ.९२-९३) प्रतिपादितम् -"तथा हि फल परीक्षायामग्निहोत्रादेः कालान्तरभाविस्वर्गफलकत्वं व्युत्पाद्य तन्निर्वाहकं चापूर्वं निरूप्य, निष्पद्यमानं प्राङ्निष्पत्तेः नासदुपादाननियमात्, न सद् विद्यमानस्योत्पत्त्यभ्युपगम उत्पन्नस्य पुनरुत्पत्त्यापत्तेः, न सदसतोः विरुद्धयोः सत्त्वासत्त्वयोरेकत्रयोगाद्, इत्याशङ्क्य "उत्पादव्ययदर्शनात्" इति न्यायसूत्रेण (४/१/४९) असत्कार्यवादः स्थापितः । उत्पन्नो घटः, नष्टो घटः, प्रतीतेः निष्पद्यमानं प्रागसदिति सूत्रार्थः । उपादाननियमाच्च हेतोर्निष्पद्यमानं प्रागसद् न सम्भवतीति न शङ्कितम् । सा च शङ्काऽवश्यं परिहरणीया । तस्याः परिहारमाह- 'बुद्धिसिद्धन्तु तदसत्' इति न्यायसूत्रम् (४/१/५०) । कार्यमुत्पत्तेः प्रागसदपि नियतकारणकत्वेन ज्ञातमिति पटार्थिनस्तन्तूनेवोपाददते, न

मृदमिति सूत्रार्थः । तस्मादसत उत्पत्तिकर्तृत्वोपपादनपरं तत्सूत्रमिति कथनं न पूर्वोक्तसन्दर्भानुगुणम् । नापि तथा व्याख्यानमुपपद्यते बौद्धस्य पूर्ववृत्तित्वे बाह्यस्य तदभावेनोत्पत्तिकर्तृत्वासम्भवस्य तदवस्थत्वात् । यद्यपि बौद्धबाह्ययोरभेदाध्यासो बौद्धार्थवादिभिः स्वीकृतस्तथापि बाह्यस्य वस्तुभूतमुत्पत्तिकर्तृत्वं न सम्भवतीति । तस्मात् पूर्वोक्तरीत्याऽर्थान्तर एव सूत्रतात्पर्यावधारणान्न सूत्रकर्तुः गौतमस्य सम्मतो बौद्धार्थः'' इति सिद्धम् ।

## ८. नलादिपदेभ्योऽपि बौद्धाकारविषयक एव बोधस्तत्समीक्षा च

बाह्यार्थाभावाददृष्टार्थकत्वाच्च नलादिपदानां वासनाया बाह्यार्थयोरध्यासस्य चासम्भव इति चेन्न, ''नलादिपदेभ्योऽपि बौद्धाकारविषयक एव बोधः'' इति वैयाकरणसिद्धान्तलघुमञ्जूषायां (पृ.३९) नागेशेनोक्तम् । अतो नलरावणादिपदाच्छाब्दबोधनिर्वाहायापि बौद्धार्थस्वीकरणमावश्यकम् । ''घटत्वादिव्यञ्जकघटादिसंस्थानामिव नलत्वादिव्यञ्जकनलादिसंस्थानानामस्माकमप्रत्यक्षत्वात्, घटादिपदानां घटत्वादिजातिविशिटे इव नलादिपदानां नलत्वादिजातिविशिष्टे शक्तिग्रहो न सम्भवति । फलबलाद् अनादीन् नलादिविषयकसंस्कारान् कल्पयित्वा, तादृशसंस्कारेणोपस्थिते शक्तिग्रहान्नलादिपदाद् विशिष्य नलत्वादिप्रकारको बोध इत्यपि न शक्यते वक्तुम् । अप्रसिद्धार्थकनलादिपदश्रवणे क एतदर्थ इति ? प्रश्नस्योपमानादिना तत्प्रतिवचनस्य चानुपपत्तेः, तस्मात् तदीयगुणसमृद्ध्यादिश्रवणोत्तरं सामान्यतो बुद्ध्या गृहीताकारे शक्तिग्रहः । बौद्ध एवार्थः शाब्दबोधे भासत इति बौद्धार्थस्वीकार आवश्यकः'' इति शाब्दतरङ्गिण्यां पूर्वपक्षस्थापने सुब्रह्मण्यशास्त्रिचरणाः प्रस्तुवन्ति ।

समीक्षा- पुराणादितो गुणसमृद्ध्यादिश्रवणान्तरं नलादिपदात् सामान्यतो बुद्ध्या गृहीताकारविशेषे शक्तिग्रहपूर्वकं तस्यैव बोध इति, न । न च नलादिपदाच्छाब्दबोधनिर्वाहाय, बौद्धार्थः स्वीकरणीयः । एवमेव नैयायिकधुरन्धरः सुब्रह्मण्यशास्त्री तत्रैव (पृ. ९०-९१) तर्कमिमं समालोचयन्प्रतिपादयति- ''नलो राजा इत्यादौ नल पदस्य नलपदबोध्ये लक्षणा । इत्थञ्च नलपदबोध्यः कश्चिद्राजा, इत्यनुभवसिद्धः शाब्दबोध उपपद्यते । न च नलपदस्य शक्तिग्रहाभावे शक्यसम्बन्धरूपलक्षणाज्ञानमपि न सम्भवतीति वाच्यम् । यत्पदं साधु व्युत्पन्नैः प्रयुक्तं तत्पदं किञ्चिद्वाचकमिति सामान्यतो

तत्पदशक्तिग्रहसम्भवात् । लक्षणाग्रहे विशिष्य शक्यतावच्छेदकभानस्यानपेक्षितत्वात् । अयञ्च बोधो बौद्धार्थवादिनामपि सम्मत एव । अत एव नलत्वादिप्रकारकान् संस्कारान्कल्पयित्वा विशिष्य नलत्वप्रकारकबोधमुपवर्णयतः कस्यचिन्मतम्, 'पद प्रकारकबोधस्यैवानुभवाच्च' इति स्वयं दूषितं संगच्छते । नलपदवाच्यःकश्चिदासीदित्याकारकेत्यर्थ इति तद्ग्रन्थव्याख्या । नलरावणादिपदेभ्योस्ततत्पदबोध्यत्वेनैव बोध इति स्पष्टमुक्तं गदाधरभट्टाचार्यैः शक्तिवादे । तस्मान्न नलादिपदेभ्यः शाब्दबोधनिर्वाहाय बौद्धार्थः स्वीकार्यः'' इति । वस्तुतस्तु नाऽत्र लक्षणया प्रक्रियानिर्वाह उचितः । ''गुणैः प्रापणमुद्देशः'' इति भाष्यविवेचितमार्गेण गुणकथनेन परोक्षस्य बोधः, इत्यनेन प्रक्रियानिर्वाहः समीचीनः प्रतिभाति । लक्षणा तु शक्यार्थस्यानुपपन्ने भवति । अत्र शक्यार्थेनैव निर्वाहः कर्त्तव्यः ।

## ९. बौद्धपदार्थानङ्गीकारे दोषस्तत्समीक्षा च

किञ्च, ''स भूरिति व्याहरत् स भूमिमसृजत'' इति तैत्तिरीयब्राह्मणोपनिषदा (२/२/४/२) श्रुत्या,

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।

इति मनुस्मृत्या (१/२१) च प्राग् हिरण्यगर्भो भूरादिशब्देभ्यस्तदर्थं ज्ञात्वा भूरादीन् लोकान् ससर्जेति गम्यते । यदि बाह्य एवार्थस्तदा बाह्याया भुवस्तदानीमभावेन भूशब्दस्य शक्तिग्रहासम्भवात्तच्छब्दाद् भुवो बोधो न स्यात् । बौद्धार्थस्वीकारे तु हिरण्यगर्भस्य सर्वज्ञत्वाद्भगवदनुग्रहाच्च वेदलाभवत् । तदैव स्वबुद्धिपरिवर्तितपदार्थस्य स्थूलरूपेण भानम् । तत्र सम्बन्धग्रहः शाब्दबोधश्च सम्भवतीत्युपपद्यते । अतो बौद्धार्थानङ्गीकारे दोषः समापतति ।

समीक्षा- यत्तु सृष्टेः प्राग् बाह्याया भुवोऽभावेन बौद्धपृथिव्यामेव शक्तिग्रहपूर्वकं हिरण्यगर्भस्य बौद्धपृथिवी बोध इति, तन्न । अस्य प्रत्याख्याने नैयायिकधुरन्धुराः सुब्रह्मण्यशास्त्रिणः प्रतिपादयन्ति -''निरुक्तश्रुत्या तत्तद्वाचकशब्दोच्चारणपूर्वकं तत्तत्पदार्थान् ससर्जेति लभ्यते । न तु शब्दादर्थं ज्ञात्वा ससर्जेति । न हि स्वस्यैव शाब्दबोधजननार्थं शब्दं प्रयुञ्जानो दृश्यते'' इति शाब्दरङ्गिण्याम् (पृ.८१) । एवमेव भगवत्पादा निरुक्तश्रुतेर्देवताधिकरणे

शब्दानुसंधानपूर्वकतत्तत्सृष्टित्वं वर्णयन्ति । यतो हि -'चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् । तथा प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः । पश्चात् तदनुगतानर्थान् ससर्जेति गम्यते । तथा च श्रुतिः 'स भूरिति'' इति शाङ्करभाष्ये देवताधिकरणे ।

एवञ्च बौद्धार्थवादिभिः सह तर्कयता तत्रैव पुनः(पृ. ९१) पण्डितराजेन सुब्रह्मण्यशास्त्रिणाभिहितम् -''यदि च, शिल्पी यथा शिल्पशास्त्रवचनेभ्यो मरुत्वताम्, इत्यादिना न्यायरक्षामणौ प्रतिपादितसरण्या हिरण्यगर्भस्य वेदवाक्याच्छाब्दबोध आवश्यक इत्युच्यते, तदापि न बौद्धोऽर्थ स्वीकार्यः । हिरण्यगर्भस्य जन्मान्तरानुभूतभूम्यादिविषयकः संस्कारो वर्तते । सृज्यमानप्राणिकर्मभिरुद्‌बुद्धेन तेन स्मृते भूम्यादौ शक्तिग्रहः । ततश्च शाब्दबोधः सम्भवतीति न बौद्धार्थापेक्षा । न च ज्ञानसामान्ये विषयस्य कारणत्वात् शाब्दबोधादिसमये बाह्याया भुवोऽभावेन कथं शाब्दबोध इति वाच्यम् । बौद्धार्थसिद्धावेव ज्ञानसामान्ये विषयस्य कारणत्वसम्भवात्, तत्साधनावसरे सिद्धवत् तादृशकार्यकारणभावोपन्यासस्यासङ्गतत्वात्'' इति ।

ज्ञानविषययोः कार्यकारणभावाद्बौद्धार्थोऽङ्गीकार्यः, अत्र मञ्जूषायां (पृ.२३) नागेशमहाभागाः प्रतिपादयामासुः -''किञ्च इच्छादीनामन्तःकरणनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्तावश्यकी'' इति । अस्मिन्वेदान्तमते ''इच्छादयो धर्माः स्वरूपसम्बधेनान्तःकरणनिष्ठास्तथा च स्वरूपसम्बन्धेनेच्छाम्प्रति सामानाधिकरण्यसम्बन्धेन विषयस्य कारणत्वम्'' इति कार्यकारणभावो विषयस्य बुद्धिस्थत्वे एव सम्भवतीति भावस्तत्रैव (पृ.२०५) । ज्ञानसामान्ये विषयः कारणम्, समानाधिकरणयोरेव कार्यकारणभावाद्बाह्यघटादिः स्वानधिकरणमनोगतज्ञानस्य न कारणं भवितुमर्हति । बौद्धार्थस्वीकारे तु बौद्धो विषयो घटादिमनोनिष्ठः स्वाधिकरणे मनसि ज्ञानं जनयेदिति कार्यकारणभाव उपपद्यते ।

एवमेव नागेशाशयमुपवर्णयन्तः समासेन पण्डितराजसुब्रह्मण्यशास्त्रिणः शाब्दतरङ्गिण्यां (पृ.६०) लिखन्ति ''-न च विषयता सम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य विषयनिष्ठप्रत्यासत्त्या कारणत्वसम्भवान्न बौद्धार्थः स्वीकरणीय इति वाच्यम् । तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वेन, तेन सम्बन्धेन विषयस्य कारणस्य कार्यभूतज्ञानाधिकरणस्ववृत्तित्वासम्भवेन,

विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावासम्भवात् । एवम् अतीतघटविषयकस्मरणज्ञानेऽतीतस्य घटस्य निरुक्तरीत्या कारणत्वं न वक्तुं शक्यते । विषयस्यातीतघटस्य बाह्यस्य स्मरणकालेऽसत्त्वेन तत्र स्मरणस्य विषयतासम्बन्धेनऽसत्त्वात् । विद्यमानयोरेव घटभूतलाद्योः संयोगादिसम्बन्धदर्शनेनाऽविद्यमानेऽतीतघटे विद्यमानस्मरणस्य सम्बन्धासम्भवात् । बौद्धार्थस्वीकारे तु बाह्यस्य घटस्यातीतत्वेऽपि बौद्धस्य विद्यमानत्वात् स्मरणसम्बन्धः, मनोनिष्ठप्रत्यासत्त्या ज्ञानविषययोः कार्यकारणभावश्चोपपद्यते" इति ।

समीक्षा- नेदं मतं व्याकरणपरम्परानुकूलम्, वैयाकरणधुरन्धरेण कौण्डभट्टेन यदुक्तं भूषणसारस्य सुबर्थनिर्णये (का. १ पृ. २१६)— "अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्यावरणभङ्गस्यावश्यकत्वात् । अन्यथा यथापूर्वं न जानामि इति प्रतीत्यापत्तेः । अतीतादेराश्रयता च विषयतया ज्ञानाश्रयताया नैयायिकानामिव" इति । तत्रैव विनष्टे घटेऽनुभवानुरोधाज्ज्ञानविषयतास्वीकार आवश्यक इति दर्पणकारो व्याचख्यौ । प्रतिवादिनाम्मतप्रत्याख्यानाय तत्रैव (पृ.८९-९०) तार्किकपण्डितराजसुब्रह्मण्यशास्त्रिणः संक्षिप्ततया प्रतिपादयन्ति -"ज्ञाने विषयः कारणमित्यस्य, विद्यमानस्यैव ज्ञानं जायत इति सारार्थः । अविद्यमानपदार्थस्मरणस्य तथाविधानुमितेः, तथाविधशाब्दबोधस्य चानुभवसिद्धत्वेन तादृशः कार्यकारणभाव एव नास्ति । अस्तु यथा कथञ्चित् कार्यकारणभावः । तथापि न तदनुपपत्त्या बौद्धार्थः स्वीकार्यः । विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्यसम्बन्धेन विषयः कारणमिति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावसम्भवात् । न च तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वेन कारणे कार्याधिकरणवृत्तित्वं न निर्वहतीति वाच्यम् । कारणस्य कार्याधिकरणसम्बन्धित्वमेवापेक्षितम्, न तु वृत्तित्वमिति तथा कार्यकारणभावे दोषविरहात् । यद्यपि संयोगः सम्बन्धः विद्यमानयोरेव, तयोरेव संयोगप्रतीतेः, तथापि विषयत्वलक्षणसम्बन्धोऽतीतपदार्थविद्यमानस्मरणज्ञानयोरपि । नेदानीं देवदत्तोऽस्ति, परन्तु स्मर्यते (स्मरणविषयः) इत्यबाधितप्रतीतेस्तत्साधिकायाः सत्त्वात् । स्पष्टश्चायमर्थः वैयाकरणभूषणसारे । एतेन, अतीतानागतस्थले सम्बन्धस्य वक्तुमशक्यत्वाच्चेति दूषणमनवकाशम् । तथा च ज्ञानविषययोः कार्यकारणभावनिर्वाहकसामानाधिकरण्योपपादनाय न बौद्धार्थः स्वीकरणीयः" इति ।

## १०. शब्दशास्त्रेतरशास्त्राणां बौद्धार्थसाधकयुक्तीनां समीक्षा

इतश्च बौद्धार्थसिद्धये यानि ब्रह्माण्डकुर्मबृहन्नारद-श्रीमद्भागवतपुराणादिवाक्यानि समुपन्यस्तानि, तान्यपि अन्यथा व्याख्याय बौद्धार्थसिद्धये प्रयत्यते । किञ्च, न तानि वाक्यानि बौद्धार्थसाधकानीति तत्तत्पुराणोक्तवाक्यानां प्रकरणादिना यथार्थव्याख्याने कृते सिध्यति । किञ्च, वेदान्तयोगसाङ्ख्यसूत्रभाष्ययोगवाशिष्ठपरमार्थसारोपनिषत्कल्पतरुवाचस्पति-व्याख्यादिग्रन्थानां वाक्यानि बाह्यजगतोऽद्वैतवेदान्तदृष्ट्या प्रमाणभूतानि भवितुमर्हन्ति, न शाब्दबोधव्यवस्थाकर्तृणां न्यायव्याकरणमीमांसादिशास्त्राणां दृष्ट्या । अतः परमतत्वान्-नागेशेनोद्धृतान्यपि तान्युपेक्षणीयानि सन्ति । तस्मादत्र न विचार्यते । भाषातत्त्वविवेचनायां शाब्दिकानां प्रयोगकर्त्तृणां लौकिकानां च प्रामाण्यम् । न चात्रान्यशास्त्रवार्ताऽऽवश्यकी । अपि च, व्याकरणेतरशास्त्रवचनानि नागेशेनोद्धृतानि व्याकरणतन्त्रे बौद्धार्थवादस्य दौर्बल्यमेव प्रकाशयन्ति । अन्यथा व्याकरणमतेन बौद्धार्थसिद्धेऽन्यशास्त्रवचनप्रामाण्यस्याऽऽवश्यकता नोदेति । अतो बौद्धार्थवादस्य दौर्बल्यं ज्ञात्वैवान्यशास्त्रवचनानि सङ्गृहीतानीति सिध्यति । अतो युक्तिभिर्दुर्बलो बौद्धार्थो नागेशप्रतिपादितोऽपि न स्वीकर्त्तव्य इति सिद्धम् ।

## ११. निष्कर्षः

अध्यायारम्भे बौद्धार्थवादिसम्मततादात्म्यलक्षणं प्रस्तुत्य घटोऽस्ति, घटो नास्ति, इत्यादिप्रयोगा अपि बौद्धसत्तास्वीकारं विनैव सङ्गच्छन्त इति सुनिरूपितम् । तथा च श्रीमता तत्रभवता नागेशभट्टेन मञ्जूषायां शब्दार्थौ बौद्धौ, एवेति भूयः प्रपञ्चितम् । परं चैतत्सर्वं शास्त्रान्तरवासनाफलं न वैयाकरणशास्त्रीयतत्त्वम् । उपचारसत्तां विनाऽपि "न पदार्थो सत्तां व्यभिचरतीति" भाष्यसिद्धान्तानुसारं वृक्षोऽस्ति वृक्षो नास्तीति प्रयोगाः, सूपपन्नाः । वस्तुतो बाह्यजगति सत्यस्य वृक्षस्य तत्तद्दैशिककालिकसम्बन्धाभ्यां वृक्षोऽस्ति, वृक्षो नास्तीति प्रयोगौ सुतरां सङ्गच्छतः । शाङ्करभाष्येणापि बौद्धार्थः खण्ड्यते, तत्र त्वयं वादः सौगतमतत्वात् प्रत्याख्यातोऽतो नागेशस्याद्वैतमतेनापि बौद्धार्थसाधनमयुक्तिकं सिध्यति । योगसूत्रेणापि बौद्धार्थस्य प्रामाण्यं धूलिप्रक्षेपमात्रम् । प्रसङ्गवशाद् बौद्धार्थसत्ताखण्डनाय

प्रमाणभूतं नैयायिकमतं समुपन्यस्तम्, यथा हि शाब्दतरङ्गिण्यां सुस्पष्टं युक्तिसिद्धं बौद्धार्थखण्डनं कृतमस्ति, तद्यथावदुद्धृत्य बौद्धार्थः शब्दाद्वैतवादिभिर्बुद्धिप्रकल्पितो मिथ्यैव न तु वास्तविक इति साधितम् । बौद्धार्थास्वीकारेऽपि व्याकरणशास्त्रे न कोऽपि दोषः समापतत्यतो बौद्धार्थो न स्वीकार्य इति निष्कर्षः ।

---

## षष्ठं पर्यालोचनम्

# न्यायमीमांसाशास्त्राश्रितानां बौद्धार्थबाधकयुक्तीनां समीक्षा

सर्वासां विद्यानां बहूपकारकरणेन वेदप्रामाण्यव्यवस्थापनेन श्रुतिस्मृतिसम्मतत्वेन च वाङ्मये न्यायदर्शनमुन्नतं पदमधिरूढं विलसति । तत्र प्रमाणेषु शब्दस्तुरीयप्रमाणम् । अतः शब्दशास्त्रेऽपि नैयायिकैर्मीमांसकैश्च भूरिपरिश्रमः कृतः । एतच्छाब्दबोधविषयकविशालग्रन्थपरम्परया ज्ञायते । शब्दस्तु कामधेनुकल्पो लोकयात्रां सम्पादयति । लोकेऽज्ञातमर्थं जिज्ञासितं जनं बुबोधयिषुमनसो जना वाक्यानि समुच्चारयन्तो दृश्यन्ते । अत एव शब्दस्य ज्योतीरूपत्वं दण्डी काव्यादर्शे प्राह । शब्देन बोधः कीदृशः ? इति विचारो व्याकरणन्यायमीमांसादिषु त्रिषु शास्त्रेष्वेव प्रमुखतया विचारितः । तत्र नैयायिकमीमांसकमतानुसारमर्थसत्ताविषयकविचारोऽनुपदमेव विवरिष्यते ।

### १. शब्दार्थयोः समयात्मकः सम्बन्धो न स्वाभाविकः

तार्किकमते तु शब्दार्थयोः सम्बन्धो न धूमाग्न्योरिव विद्यते । तथात्वे तु 'अन्नम्' इत्युक्तेऽर्थस्य सत्त्वेन तत्कार्यमुदरपूरणम्, 'अग्निः' इत्युक्ते वह्निकार्यदाहः, असिरित्युच्चारितेऽसिकार्यं पाटनं च न जायेत । यथोक्तं न्यायसूत्रे– "पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः" (२/१/६४) । न ह्येतानि जायन्ते । अतः शब्दार्थयोः सम्बन्धो नास्तीति पूर्वपक्षः, यदि शब्दः स्वासम्बद्धमर्थं प्रत्याययति, तदा सर्वोऽपि शब्दः सर्वमर्थं बोधयेदसम्बद्धत्वाविशेषात् । अतः शब्दः स्वसम्बद्धमेवार्थं बोधयतीति निर्वाहाय

शब्दार्थयोः सम्बन्धोऽवश्यं स्वीकरणीयः । तथापि न तयोः प्राप्तिलक्षणः सम्बन्ध, परञ्च "अस्मात् पदादयमर्थो बोद्धव्यः" इति समयात्मकः, इत्यपि तत्रैवैतेन "न सामयिकत्वाच्छब्दार्थसम्प्रत्ययश्च" (न्या. २/१/५६) भासते । तदधीनश्च शब्दार्थावबोधः । आर्यमलेच्छादीनां यवादिशब्दैर्दीर्घ-शूककङ्ग्वादेर्भिन्नस्यार्थस्य बोधादपि न शब्दार्थयोः स्वाभाविकः सम्बन्ध; परन्तु समय एवेति प्रतीम इति न्यायराद्धान्तः । यथोक्तं तत्रैव- "जातिविशेषे चानियमात्" (२/२/५७) ।

अत्र न्यायभाष्याकारा प्रतिपादयाञ्चक्रे हि -"न सम्बन्धकारितं शब्दार्थव्यवस्थानम् । किन्तर्हि ? समयकारितम् । यत्तदवोचाम् -अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः सम्बन्ध इति समयं तमवोचाम इति । कः पुनरयं समयः ? अस्य शब्दस्येदमर्थजातमभिधेयमिति, अभिधानाभिधेयनियमनियोगः । तस्मिन्नुपयुक्ते शब्दार्थसम्प्रत्ययो भवति । विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः । सम्बन्धवादिनापि चायमवर्जनीयः" इति (२/१/५६) । अत्रेदमवधेयम् । ज्ञानस्य सविषयत्ववादिनो नैयायिकास्तेषां नये निर्विषयं ज्ञानं न सम्भवति । न च सविषयत्वं नामार्थप्रापकत्वम् । ज्ञानमात्रेण कश्चिदर्थोऽवश्यं विषयीक्रियते, प्रत्यक्षेणैवार्थः प्राप्यत इति साक्षात्करणं हि प्राप्तिः । घ्राणेन्द्रियेण कुसुमस्य सुरभिर्गृह्यते, प्राप्यते वा । रसनेन्द्रियेण गुडस्य मधुरो रसः प्राप्यते । तथा च सर्वाणीन्द्रियाणि स्वानर्थान् न केवलं ज्ञापयन्ति, अपि च प्रापयन्ति । प्राप्तिस्तु न सर्वत्र हस्ते नारिकेलवत् । सूर्यदर्शनेन या प्राप्तिः सा चाक्षुषी प्राप्तिः, न त्वगिन्द्रियविषयिका। धूमदर्शनेन वह्निरनुमीयते, न तु प्राप्यते (साक्षात्क्रियते) प्रत्यक्षेणैवार्थः प्राप्यते न तु ज्ञानमात्रेण । अतो गुड इति शब्दश्रवणान्न मधुररसास्वादप्रसङ्गः, शाब्दबोधस्यार्थप्रापकत्वाभावात् । शाब्दबोधस्यानुमितेरिवार्थप्रापकत्वाभावात् । प्रत्यक्षप्रमा सम्प्रतिसत्तावतोऽर्थानेव ग्राहयति प्रापयति वा । प्रत्यक्षेतरप्रमा चानागतातीतसम्प्रतिसत्तावतः सर्वानर्थान् विषयीकर्तुं समर्था । अतो न वस्तुस्वभावाच्छब्दश्रवणेनार्थज्ञानं भवति । कस्मात्तर्हि ? समयात् । धूमदर्शनाद्यद् वह्निज्ञानं, तत्तु व्याप्तिरूपस्वाभाविकसम्बन्धकारितम् । घट इति पदश्रवणाद्यत् पदार्थविशेषस्य ज्ञानं भवति, न तत्स्वाभाविकसम्बन्धकारितम्, पुरुषेच्छाधीनं समयकारितं तत् । अतः शक्तिग्रहाधीनोऽभिधानाभिधेयरूपः सम्बन्धोऽभ्युपगतः । शक्तिश्च नैसर्गिकी दीपादिना यथा रूपं प्रकाशयति, तथा शब्दद्वारार्थं प्रकाशयति । यथोक्तं न्यायमञ्जर्य्याम् -"शक्तिस्तु नैसर्गिकी, यथा

रूपप्रकाशिनी दीपादेस्तथा शब्दस्यार्थप्रतिपादने'' (पृ. २४१)। स च समय ईश्वरकल्पितो व्यवहारादिनाऽस्माभिर्गृह्यते। तथा गृहीतशक्तिकेनैव शब्देनार्थो बोध्यते। यथोक्तम्-

अङ्गुल्यग्रेण निर्दिश्य किञ्चिदर्थं पुरःस्थितम्।

व्युत्पादयन्तो दृश्यन्ते बालानस्मद्विधा अपि।। न्यायमञ्जरी पृ. २४५-४६

आधुनिकैश्चेच्छामात्रं शक्तिरित्यभ्युपगतम्। न तु तत्रेश्वरेच्छायाः प्रवेशः। आधुनिकसङ्केतितेऽपि शक्त्यङ्गीकारात्। शक्तिग्रहोऽयं व्याकरणादिभिर्भवति। यथा विश्वनाथेनावतार्यते-

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।

वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।। मुक्तावलिः ५४८.

प्रकृतमनुसरामः। अत्र तार्किकप्रतिपादितः सम्बन्धः समय उचितः प्रतिभाति।

## २. न्यायसूत्रे सौगतानां बौद्धार्थवादस्तत्समीक्षा

बौद्धार्थवादिनः सौगता बाह्यार्थं न स्वीकुर्वन्ति। यथा नागेशेन मञ्जूषायामुक्तम् -''एवं शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः'' इति। तथैव बाह्यार्थभङ्गवादिनः सौगताः सङ्गिरन्ते ''अयं पटः, इत्यादीनि ज्ञानानि न बाह्यपदार्थमवलम्बन्ते। पटे विविच्यमाने, न तन्तुभ्यो व्यतिरिक्तः पटो नाम कश्चन पदार्थ उपलभ्यते। एवं तन्तुरिति ज्ञानेऽपि तदवयवांशुव्यक्तिरिक्तो न कोऽप्यर्थः प्रतीयते। तस्मादयं पट इत्यादिकं ज्ञानं न बाह्यं पटादिपदार्थमालम्बते, तस्यासत्त्वात्। अपि च पटाकारं जायते। विषयश्च न ज्ञानातिरिक्तः'' इति (पृ.२०३)।

न्यायदर्शने चतुर्थाध्याये द्वितीयाह्निके द्वादशभिः सूत्रैः (२६-३७) अस्य बौद्धार्थवादमतस्य निराकरणं कृतम्। इदं बौद्धार्थवादिनाम्मतं न साधु। अत्रोच्यते -बुद्ध्या विवेचने पटस्य तन्तुरूपता न सिध्यति। 'व्याहतत्वादहेतुः' तदाश्रयत्वादपृथग्ग्रहणम्' इति न्यायदर्शने ४/२/२६-२८ प्रोक्तम्।

न हि तन्तुः पट इति कस्यापि बुद्धिरुदेति। अपि च तन्तुतः पट इति बुद्धिरुदेति। तथा च विवेचनेन बाह्यार्थ एव सिध्यति।

''प्रमाणतश्चार्थप्रतिपत्तेः'' तत्रैव (४/२/२९) । अनुव्यवसायेनापि ज्ञानस्य पटविषयकत्वमुल्लिख्यते, न पटाभेदः । न च पटो यदि तन्तोर्भिन्नः तदा तन्तुं विनापि प्रत्यक्षगोचरः स्यादिति वाच्यम् । पटस्य तन्त्वाश्रितत्वात् सामग्रीसत्त्वेन पटप्रत्यक्षे तन्तुर्विषयो भवति । न च ज्ञानस्योभयवादिसिद्धत्वेन तन्मात्रस्वीकारे लाघवात् तदतिरिक्तपदार्थाऽभाव इति वाच्यम् । बाह्यस्य घटादेरर्थस्य प्रामाणिकत्वात् तदङ्गीकारे गौरवं बाधकं न भवति । अपि च बाह्यार्थाभावो यदि प्रमाणेन साध्यते, तदा प्रमाणस्य बाह्यस्य स्वीकारान्न बाह्यार्थाभावः । यदि तत्र न प्रमाणं तदाऽप्रमाणिकत्वाद् बाह्यार्थाभावो न सिध्यति । यथोक्तं-''प्रमाणानुपपत्त्युपपत्तिभ्याम्'' तत्रैव (४/२/३०) । न च प्रमाणप्रमेयव्यवहारो न पारमार्थिकः । सर्वाणि ज्ञानानि च वासनापरिपाकवशात् स्वाप्नज्ञानवद् गन्धर्वनगरमृगतृष्णादिप्रतीतिवद् वाविर्भवन्तीति वाच्यम् । प्रमाणाभावाद् बाह्यार्थाभावो न सिध्यति । यथोक्तं न्यायसूत्रेषु– ''स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः, मायागन्धर्वनगरमृगतृष्णिकावद्वा, हेत्वभावादसिद्धिः'' च (४/२/३१-३३) ।

चक्षुरादेर्हेतोरनभ्युपगमेन घटोऽयमित्यादिज्ञानानामप्यसिद्धिरेव । यथा स्मृतिः पूर्वोपलब्धविषयस्तथैव स्वप्नप्रत्ययोऽपि पूर्वोपलब्धविषय एव न निर्विषयः । यथोक्तं न्यायसूत्रे– ''स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः'' (४/२/३४) । अत्र ''स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पते । एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन । यः सुप्तः स्वप्नं पश्यति, स एव जाग्रत्स्वप्नदर्शनानि प्रतिसन्धत्ते, इदमद्राक्षमिति । तत्र जाग्रद्बुद्धिवृत्तिवशात् स्वप्नविषयाभिमानो मिथ्येति व्यवसायः । ......यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानाद् इति'' न्यायभाष्यकाराः (४/२/३४) । मिथ्याज्ञानं तु सत्यज्ञानमपेक्षते, यथा प्रधानाश्रयः । अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः । असर्पभूतायां रज्जौ सर्प इति व्यवसायः, स प्रधानाश्रयः, न खलु सर्पेऽनुपलब्धे सर्प इत्यसर्पे व्यवसायो भवति । एवमेव स्वप्नादिविषयाणां व्यवसायः हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाश्रयो भवितुमर्हति । तस्माज्जाग्रतावस्थायामनुभूतं ज्ञानं सत्यमिति सिद्धम् । तस्याश्रयेणैव मिथ्याज्ञानोपपत्तिः । तथा च सत्यज्ञानेन मिथ्योपलब्धिर्निवर्त्त्यते नार्थः, यथा जागरिते या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो नश्यति, नार्थो विषयसामान्यलक्षणः । एवमेव मायागन्धर्वनगरमृगतृष्णादिषु बोध्यम् । यथोक्तं

तत्रैव– "मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे" (४/२/३५) । एतेनालोचनेन बाह्यस्येव बुद्धेरप्यसत्त्वमिति मतं निरस्तमिति ज्ञेयम् । बुद्धेः सहेतुकत्वमुपलभ्यते । यथोक्तं न्यायसूत्रे- "बुद्धेश्चैव निमित्तसद्भावोपलम्भात्" (४/२/३६) इति । न हि निःस्वरूपलीकं हेतुमलीकं हेतुमद्भवति । अतो बुद्धिरपि सतीति बोध्यमिति न्यायसूत्रभाष्यकाराणामाशयः । अतो बौद्धार्थवादो न युक्तिसम्मत इति सिद्धम् ।

## ३. भर्तृहरिणा सह मीमांसकतार्किकाणाम्मतभेदः

व्याकरणदर्शनं तु परमवैदिकं शिष्टसमर्थितमित्यत्र न संशीतिलेशः । यद्यप्यस्य दर्शनस्य द्वादशदर्शनेषु परिगणनं न, तथापि सर्वदर्शनसङ्ग्रहे माधवाचार्येण, सर्वदर्शनसिद्धान्तसंग्रहे शङ्कराचार्येण च व्याकरणदर्शनस्य प्रतिपादनं क्रियते । तच्च दर्शनं महाभाष्ये भगवत्पतञ्जलिना यथावसरं निरूपितम् । "सर्ववेदपारिषदं हीदं व्याकरणम्, तत्र हि नैकः पन्थाः शक्य आस्थातुम् " इति महाभाष्यवचनेन व्याकरणं वेदानां सर्वदर्शनानां च सर्वस्याः शाखाया अङ्गमिति सूपपादितं भवति । तदनु महाभाष्ये प्रयुक्तदार्शनिकतत्त्वानां संग्रह विधाय भर्तृहरिर्व्याकरणदर्शनस्य स्वरूपं निश्चेतुं बहुविधचिन्तनं कृत्वा, वाक्यपदीयाख्यग्रन्थरत्नं वैशद्येन व्याचकार । तस्मिन् सर्वदर्शनसम्मततत्त्वानि निरूपितानि । तथापि तेषां भर्तृहरिचरणानां महाभिनिवेशो शब्दाद्वैतवादं विवर्त्तवादमेवाभिव्यनक्ति । अनेन महाभिनिवेशेन व्याकरणदर्शनस्यैकाङ्गित्वं समापद्यते, तस्मात्सर्वत्र वैयाकरणसिद्धान्तसहचरा अपि मीमांसका विवर्त्तवादस्य विरोधे बद्धपरिकरा अभवन् । दृश्यतेऽयं विरोधः मीमांसकमूर्धन्यकुमारिलभट्टस्य श्लोकवार्त्तिकग्रन्थस्य पदे पदे । मीमांसकाः विवर्त्तवादमुताहो परिणामवादमपाकर्त्तुं वैशद्येन तर्कान् प्रपञ्चयन्ति । युक्तमप्येतत्, अस्य प्रबन्धविषयस्यौपचारिकसत्तामुख्यसत्ताभेदविमर्शस्य चिन्तने मीमांसकानां नितरां पराङ्काष्ठामधिरूढपक्षं समुपन्यस्य वैयाकरणदृशा किमपि विचारयितुमुत्सहे । तथा च मीमांसकानां शब्दाद्वैतविरोधे गते तार्किकैरपि मीमांसकमतमेव सादरमनुसृतमित्यपि, अत्रैव यथास्थानं समुपन्यस्यते ।

## ४. भर्तृहरिसिद्धान्तितशब्दाभेदवादस्य प्रत्याख्यानम्

यद्यपि मुनित्रयमतं सम्पूर्णं मीमांसकैरपि स्वीक्रियते, तथापि भर्तृहरिणा वाक्यपदीये स्ववृत्तौ वा महाभाष्यटीकायां यन्निगदितं तत्सर्वं न मीमांसकैः स्वीकृतम् । यथा प्रदर्शयिष्यते, यतो हि सर्वं ज्ञानं शब्देनानुविद्धमिव भासते । अशब्दज्ञस्य नैव गोत्वादिप्रतीतिरस्ति, शब्दानुबेधस्य तदानीमभावात् । अशब्दानुविद्धस्य च प्रत्ययस्याभावादिति भर्तृहरिपादाः । यथाहुः -

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ वाक्यपदीयम् १/१.

न सोऽस्ति प्रत्ययो लोके य शब्दानुगमादृते ।
अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ वाक्यपदीयम् १/१२३.

यद्येनानुविद्धं तत्ततो न भिद्यते, यथा मृदानुविद्धा घटादयो नामृदात्मकाः । यो वा यस्य परिवर्तः स ततो न भिद्यते, यथा चन्द्रपरिवर्त्तो जलचन्द्रः, शब्दपरिवर्त्तश्च सर्वोऽर्थः शब्दाकारप्रतिभासनात् । शब्दाः वर्णैरनुविद्धाः, वर्णाश्च स्वरैरनुविद्धाः, स्वराश्च नादेनैकेनानुविद्धास्तस्मादेकं शब्दात्मकं सर्वं जगदिति ।

### (अ) शब्दस्योपायताऽध्यासे बाधिका

मतमिदमसहमानो मीमांसामूर्धन्यः कुमारिलः प्राह-

न चाविकल्पितः शब्दादिति वाच्यो न गृह्यते।
तेनाऽगृहीतशब्दोऽपि गोत्वादीन् प्रतिपद्यते॥श्लोकवार्त्तिके प्रत्यक्षसूत्रम् १७६.

अत्रोक्तमशब्दानुविद्धमपि ज्ञानं वर्तते तेनाशब्दज्ञोऽपि गोत्वादिकमर्थं प्रत्यक्षादिना बोधयत्येव । एवञ्च शब्दाद्यदर्थविषयकज्ञानं जायते, तस्मिन्नप्यर्थे शब्दाभेदस्य भानं नास्ति । घटाद्यर्थग्राहकं तु चक्षुरिन्द्रियम्, तथा च घटादिशब्दग्राहकं श्रवणेन्द्रियम्, तस्मात् शब्दादर्थो भिन्नः, अर्थाच्छब्दो भिन्न इति सिद्धम् शब्दार्थयोर्भिन्नेन्द्रियग्राह्यत्वात् । उक्तञ्च-

श्रुतिसंस्पर्शबोधेऽपि नैवाभेदोपचारता ।
विवेकादर्थशब्दानां चक्षुःश्रोत्रधिया कृतात् ॥ तत्रैव प्रत्यक्षसूत्रम् १७७.

अग्रेऽध्यासमपि खण्डयति । यद्युपायः शब्दो व्यक्तमसौ रूपमर्थेऽध्यारोपयति दर्पणे मुख इवेत्यध्यासवादिनः । तन्न, यथाहि-

न चोपेयेऽभ्युपायस्य रूपाध्यासः प्रसज्यते ।
न हि दीपेन्द्रियादीनां रूपाध्यारोप इष्यते ॥ तत्रैव १७८

घटादिधर्मिषु घटत्वप्रमेयत्वाभिधेयत्वादयोऽनेके धर्माः सन्ति । तत्र घटप्रमेयादिशब्दस्तेषु धर्मेषु कस्याप्येकस्य धर्मस्यावधारणात्मकज्ञानस्योपायमात्रोऽस्ति, न तु शब्दार्थयोरभेदारोपस्य कारणम् । अतोऽर्थस्तूपेयः, स च शब्दरूपोपायस्याध्यासरूपो भवितुं नार्हति, यद्यर्थः शब्दाध्यासः, तर्हि घटादीनां प्रत्यक्षरूपोपेयेष्वपि दीपस्येन्द्रियाणाञ्चोपायानामप्यध्यासरूपता सम्भविष्यति ।

## (इ) तार्किकैः शब्दविवर्त्तवादखण्डनस्य समर्थनम्

आचार्यभर्तृहरिणा वाक्यपदीयमङ्गलकारिकायामेव शब्दोऽर्थभावेन विवर्तत इति स्फोरितम् । नैयायिकैरस्य विवर्तवादस्य विरोधे विशेषभावेन प्रयत्नाः सुविहिताः । यथा च विवर्त्ते क्षीरमिव दधिरूपेण परिणामित्वेन विकारितया वा क्षीरादेरिवानित्यत्वप्रसङ्गात्, तथा भावेऽपि च नाद्वैतसिद्धिः, दध्न इव क्षीरविकारस्य शब्दविकारस्यार्थस्य ततोऽन्यत्वात्, अन्यत्वाच्च बाधककारणकालुष्याद्युपप्लवविरहिताकिसलयप्रतीतिसमर्पितभेदत्वात् । अत एव न्यायमञ्जर्यां (पृ.१०२) भट्टजयन्तेनाऽऽस्थापितम्- ''अथार्थप्रतिभासमसत्यमपीन्द्रजालवदुपदर्शयति शब्द इत्ययं विवर्त्तार्थः, सोऽपि न युक्तः, बाह्यस्य वस्तुनः पदाभिधेयस्य जातिव्यक्त्यादेर्वाक्यवाच्यस्यापि भावनादेः पूर्वप्रसाधितत्वात्, अवयव्यादेश्चादूरे एवाग्रे समर्थितत्वात्, न चेन्द्रजालमायादिवदयथार्थतायामिह किमपि कारणमुत्पश्यामः । अथार्थरूपेण शब्दः शुक्तिरिव रजताकारतयाऽवभासत इतीयं विवर्त्तवाचो युक्तिः, इयमपि न साधीयसी, शुक्तिका हि रजतवत्प्रकाशते'' इति । एवमेव तार्किकैर्न केवलविवर्त्तवादस्य, अपि च प्रायः तत्साधकसमग्रयुक्तीनां प्रकृष्टं खण्डनमुपन्यस्तम्, तत्तु यथास्थानं सोपस्तम्भं प्रतिपादयिष्यते ।

## ५. शब्दाद्वैतप्रत्याख्याने प्रत्यक्षज्ञानं न शब्दानुविद्धमिति तार्किकमतम्

आचार्यभर्तृहरिमतेन प्रत्यक्षज्ञानमपि ज्ञानान्तरवच्छब्दानुविद्धम् । अत्र तार्किका मतमिदमपाकर्त्तुं चेष्टन्ते, जयन्तभट्टस्य न्यायमञ्जर्यां मतालोचनं विशेषभावेन क्रियते । तत्तु अग्रे यथावदुद्धृत्य प्रस्तूयते-

तत्र तु प्रथमस्तर्कोऽयम् -निर्विकल्पकप्रत्यक्षं तु सर्वथा शब्दसंसर्गशून्यमेव सम्भवति, सविकल्पकप्रत्यक्षे शब्दसंसर्गस्तथापि न शब्दानुवेधः । शब्दार्थसम्बन्धव्युत्पत्तिरहितानां सङ्केतज्ञानरहितबालानां मूकानाञ्च यज्ज्ञानं प्रतिभाति, तत्तु शब्दसम्भेदशून्यं शुद्धवस्तुविषयकमेवेति सर्वैः मन्तव्यम् । शब्दार्थसम्बन्धे ये व्युत्पन्ना तेष्वपीन्द्रियार्थसन्निकर्षे जाते सति प्रथमतः शब्दोपरागरहितस्य सर्वथा शुद्धवस्तुनो ज्ञानमाविर्भवति । ज्ञानमिदं विकल्परहितम् । एतादृशस्य निर्विकल्पस्य ज्ञानस्य स्वीकारो नितान्तमावश्यकः । यतो हि तदुत्तरभावी सविकल्पकज्ञानकाले शब्दं स्मर्तुं, शब्दसंस्कारबोधकं शब्दोल्लेखेन सर्वथा रहितं शुद्धवस्तुविषयकज्ञानमवश्यमपेक्ष्यते । अन्यथा सविकल्पकज्ञाने शब्दस्मरणं कथं स्यात् । निर्विकल्पकप्रत्यक्षे त्वनुभूयमानशुद्धवस्त्वेव स्ववाचकशब्दस्योद्बोधे हेतुरवकल्प्येत ।

सविकल्पकज्ञानविषयेऽपि वाचकशब्दः वाच्यार्थस्य न तत्प्रकारकविशेषणं भवितुमर्हति, यथा रूपं रूपवतो द्रव्यस्य । अतो नैयायिकमतेन सविकल्पकदशायामपि शब्दार्थयोस्तादात्म्यं नोपजायते । तस्यामवस्थायामपि वस्तुस्वरूपं निर्विकल्पकदशावदेव प्रतीयते । तथा च सविकल्पकदशायां संज्ञासंज्ञिसम्बन्धमधिकं बुद्धिमधिरोहति, निर्विकल्पकदशायां न । यथोक्तम्— ''तत्राभिधीयते न खलु प्रकारत्रयमपीदमुपपद्यते पदपदार्थसम्बन्धव्युत्पत्तिविरहिणामनवाप्तशब्दयोजनावैरूप्यसारूप्यमात्रप्रतिशुद्धवस्तुग्रहणप्रवणेन्द्रियजप्रत्ययदर्शनाद् वृद्धव्यवहारपरिचयाधिगतशब्दार्थसम्बन्धसंस्थाधियामपि शब्दस्मरणसंस्कारप्रबोधहेतुभूतप्रथमोद्भूतविशुद्धवस्त्ववभासस्यापरिहार्यत्वात्, यत्र हि वस्तुनि निविशमानः शब्दः शब्दविद्व्यवहारेषु योऽवधृतस्तद्दर्शने तत्संस्कारप्रबोधात्स्मृतिपथमेति नान्यथेति, सामान्यशब्देष्वपि यत्तत्सत्किमित्यादिषु विशेषशब्देष्विव सैव वार्ता तेषामपि व्युत्पत्त्युपयोगविरहे विविधवनविहारिविहङ्गकूजितादिवार्थप्रतीतिहेतुत्वानुपपत्तेः, सविकल्पकदशायामपि न

वाचकविशिष्टं वाच्यं मेचकगुणखचितमिव कुवलयमलोकयतीति । संज्ञित्वमात्रमधिकमधुना ध्वनिसन्निधाने बुद्धिमधिरोहति, न तद्विशिष्टोऽर्थः । तस्य हि श्रोत्रेण नेत्रेणोभाभ्यां न केवलेन मनसा वा ग्रहणमुपपद्यतेऽतिप्रसङ्गाद्'' इति (पृ. १००)।

एवमेव प्रपञ्चयता शब्दाद्वैतवादिनां वैयाकरणानां समर्थितशब्दाध्यासवादस्य प्रत्याख्याने जयन्त आह- ''शब्दो ह्यनेकधर्मके धर्मिण्येकतरधर्मावधारणाभ्युपायो भवति न तत्रात्मानमारोपयति, न हि दीपेन्द्रियप्रभृतयः प्रतीत्युपायास्तदुपेये रूपादावात्मानमारोपयन्त्यत एव तदुपायत्वभ्रमकृतस्तदभेदवादोऽपि न युक्तः।

न ह्युपायादभिन्नत्वं तदुपेयस्य युज्यते ।
रूपस्य न ह्यभिन्नत्वं दीपाद्वा चक्षुषोऽपि वा ॥

अपि च - यदि शब्दाद्भिन्नोऽर्थः प्रतिभात्येव कोऽध्यासार्थः ? अध्यासभ्रमस्तु वैयाकरणानामेकाकारनिर्देशदोषनिर्मितः इति न्यायमञ्जर्यां (पृ.१००) प्रस्तुतं मतमिदं कुमारिलभट्टस्यैव, यैः पूर्वमेवोक्तं श्लोकवार्त्तिके प्रत्यक्षसूत्रे- ''गौरित्येष निर्देशो, वाच्यतद्बुद्धिवाचिनाम् '' (१८२)। यथा लोके 'कस्त्वया दृष्टोऽर्थः' इति पृष्टे, गौरिति प्रत्युत्तरम्, 'कीदृशं ते ज्ञानमुत्पन्नम्' इति पृष्टे गौरिति प्रत्युत्तरम्, 'कीदृशं शब्दं प्रयुक्तवानसि' इत्यत्रापि गौरिति प्रत्युत्तरम्, तत एषा भ्रान्ति, वस्तुतो विविक्तैवेति शब्दज्ञानार्थाः । अत एव मीमासंकप्रवरेणापि विवेचितम्-

न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।
प्राक् शब्दाद्यादृशी बुद्धिः शब्दादपि हि तादृशी ॥

श्लोकवार्त्तिकं प्रत्यक्षसूत्रम् १७२ ।

बुद्धिरेवात्र शब्दाकारा नास्तीति भावः । एवञ्च न्यायपरम्परायां शब्दाद्वैतवादं तिरस्कृतमेव, तस्मादेव हि न्यायभूषणकारैरभिहितम्- ''सूत्रकृता सर्वेषामद्वैतवादिनां प्रतिषेधार्थकमेव सूत्रमुक्तम् -''संख्यैकान्तासिद्धिरित्यादि'' । सत्कार्यप्रतिषेधान्न स्पर्शाद्याकारेण शब्दतत्त्वस्य परिणामः'' इति (पृ.५८०-५८१)।

वस्तुतः शब्दाद्वैतविरोधे यो नैयायिकानामभिप्रायः, स एव मीमांसकानामपि कल्प्यते । श्लोकवार्त्तिके भट्टजयन्तप्रयुक्त-

युक्तीनामुपलब्धितोऽनुमीयते, तस्माच्छ्लोकवार्त्तिकाद् युक्तिसङ्ग्रहो जयन्तेन कृतः । तस्माच्छब्दार्थसम्बन्धेऽव्युत्पन्नानां बालवधिरमूकानां ज्ञानं शब्दोपरागरहितं विशुद्धवस्तुविषयकमेव तत्रापि प्रतिपादितम् । तथा च शब्दार्थसम्बन्धे व्युत्पन्नेष्वपि सविकल्पकपूर्वभाविज्ञानं निर्विकल्पकं शब्दोपरागरहितमेवातो विवक्षितम्-

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।

बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ श्लोकवार्त्तिकम् प्रत्यक्षसूत्रम् ११२.

तर्कोऽयं जयन्तेनापि सादरमनुसृतः -''एवमनभ्युपगमे तु संविदप्रकाशशून्यतयानधिगतविषयः सर्व एवान्धमूकप्रायो लोके स्यात्'' इति न्यायमञ्जर्य्याम् (पृ. ९९) । एवमेव जयन्तानुसारं पार्थसारथिमिश्रेणाऽपि न्यायरत्नाकरे (प्रत्यक्षसूत्रे ११२) समुट्टङ्कितम् -''बालानामिवाऽव्युत्पन्नानामस्माकमपि चक्षुःसन्निपातानन्तरं सविकल्पकात् प्रथममस्ति निर्विकल्पकं प्रतीतिसिद्धमालोचनविज्ञानं शुद्धवस्तुविषयम् । तद्भावे हि निर्निमित्तं न शब्दस्मरणं स्यात् । अस्मृतशब्दस्य च न शब्दानुविद्धो विकल्पः संभवति'' इति । अतः शब्दाद्वैतवादो न समञ्जस इति सिद्धम् ।

## ६. भर्तृहरिणा शब्दाध्यासवादस्य स्थापना

शब्दाद्वैतवादिना भगवता भर्तृहरिणोपचारसत्तां साधयताऽध्यासम्बन्धस्यानिवार्यता प्रतिपादिता । स चाध्यासो पुण्यराजहेलाराजादिभिरुक्तः—

१-''अथाऽत्रानवयव एवैकस्मिन् स्फोटात्मके वाक्ये प्रतिभालक्षणे च वाक्यार्थे वाक्यवाक्यार्थयोरध्यासरूपः सम्बन्धः''— वाक्यपदीये, पुण्यराजीये २/१/२ ।

२-''अत एव द्विविधः सम्बन्धपदार्थो व्यवतिष्ठते, योग्यता कार्यकारणभावश्च । अध्यासस्तु द्वयोरपि परमार्थ एव न पृथग्रूपः'' वाक्यपदीयप्रकाशे ३/३/१ ।

३-"इयं च योग्यता शब्दानामर्थप्रतीत्यनुसारेणैव व्यवस्थापयितव्येति । अभेदेन शब्दार्थयोः प्रत्ययादध्यासफलैवावस्थितेति स एव मुख्यः सम्बन्धः" तत्रैव ३/३/२९ ।

४-"एवं चोभयथा कार्यकारणभाववर्णनाद् धूमाग्निवैलक्षण्येन शब्दार्थयोरभेदेन सम्बन्धोऽध्यासलक्षणः प्रतिपादितो भवति । तथा हि बुद्धौ शब्दार्थयोः पूर्वमभेदेनावस्थानम् । न हि विवक्षितोऽर्थः शब्दसंभेदशून्यः, अन्तःसञ्जल्परूपस्य तस्य प्रतिभानात् । अनादिशब्दभावनानुविद्धं हि तिरश्चामपि ज्ञानम् । अत एव स्थानकरणव्यापापारादभिव्यक्तोऽर्थ-स्वरूपशबलः शब्दः श्रोतृभिरवधारितः, स्वरूपाच्छुरणयार्थमवगमयति । प्रतिपाद्यप्रतिपादकयोर्हि परस्पराभिप्रायसङ्क्रान्तिव्यवहारः" तत्रैव ३/३/ ३२ ।

५. तथैव लघुमञ्जूषायां (पृ.३२) भट्टनागेशेनाध्याससिद्धिः प्रदर्शिता - "कः शब्दः, कोऽर्थः ? इति प्रश्ने घट इत्ययं शब्दः, घट इत्यमर्थ इत्येकाकारोत्तरदर्शनात् तयोरध्याससिद्धिः" । बौद्धार्थसाधकस्याध्यासस्य समीक्षणमग्रे न्यायादिदृशा समुपस्थाप्यते ।

## (अ) शब्दाध्यासस्य न्यायमीमांसाशास्त्रदृष्ट्या प्रत्याख्यानम्

बौद्धार्थवादिनां सिद्धान्तपरीक्षणे प्रतिवादिनाम्मतस्य महत्त्वपूर्णस्थानमिति न केनचिदपलापयितुं शक्यते । अतो न्यायमीमांसामतं प्रतन्यते । किञ्च, यदि व्यक्तिरिव जातिरूपेण, जातिरपि शब्दरूपेण गृह्यते, न च बाध्यते, तथा सत्यभेद एव स्यात्, न त्वध्यासः, इत्यध्यासं प्रत्याख्यातुं पुनराह-

नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते ।
रूपान्तरं न दृष्टं चेद् भेदाध्यासौ कुतो न्विमौ ॥

श्लोकवार्त्तिके प्रत्यक्षसूत्रे १८०;

अस्याशयस्तु -घटादयोऽर्था घटत्वादिरूपेण प्रकाशन्ते, अत एव जातिव्यक्त्योरभिन्नत्वं निष्पद्यते । तथैव यदि जात्यपि शब्दाभिन्ना नियमतः प्रतीयते, तर्हि जात्यभिन्नव्यक्तिविषयप्रतीतेः शब्दाभिन्नजातिविषयकप्रतीतेश्च द्वयोरेवाध्यासः कथं न स्यात् ? अर्थो यथार्थरूप एव मन्तव्यः तस्माज्जातिशब्दयोरभेदोऽपि वास्तविकः स्वीकर्त्तव्यः, तेन शाब्दबोधे प्रमात्वस्य शङ्कापि निरस्ता भविष्यति ।

एवं शब्दतदर्थजात्याद्योरभेदे सति तदनुविद्धस्य बोधस्य न मिथ्यात्वम् । भेदे सति न चाध्यारोपः । अध्यारोपस्तु भर्तृहरिमते भ्रान्त्या कल्प्यते । अत्यन्तभिन्नयोः द्वयोः पदार्थयोः परस्परमध्यासो न सम्भवति यथा अन्धकारप्रकाशयोः (तत्रैव १८१) । वैयाकरणभ्रान्त्याऽध्यास उपपन्नः ।

वस्तुतोऽत्राऽध्यासभ्रमस्य कारणं वर्तते, ज्ञानस्यार्थस्य च निर्देशः शब्देनैव क्रियते, ज्ञातवस्तुनो निर्देशः शब्देनैव सम्भवति । अतो वाच्यस्य (अर्थस्य) शब्दस्य ज्ञानस्य च निर्देशः शब्देनैव क्रियंते, यथा गौरित्यर्थः, गौरितिशब्दः, गौरिति ज्ञानमिति । अतस्तेषु शब्दाभेदस्य भ्रान्तिरुत्पद्यते । यथाह-

शब्देनैव च निर्देशो गृहीतेऽर्थेऽवकल्पते ।

गौरित्येव च निर्देशो वाच्यतद्बुद्धिवादिनाम् ॥ तत्रैव १८२.

गोरूपवाच्यार्थस्य गोशब्दस्य गोविषयकज्ञानस्य च गौरित्यनेन पदेनाभिधानाद् निर्देशतुल्यतामाकर्ण्य श्रोता शब्दाभिन्नं ज्ञानं अर्थश्चेति भ्रान्त्या मन्यते । यथोक्तम्-

निर्देशतुल्यतायां च श्रोता वक्तृस्वरूपता ।

शब्दज्ञानप्रमेयेषु विज्ञानस्यावसीयते ॥ तत्रैव १८३;

शब्दज्ञानयोः पदार्थाध्यासो न श्रोत्रा प्रतीयते, यद्यपि निर्देशतुल्यत्वे भ्रान्तिहेतौ सति, ज्ञानार्थयोः शब्दाध्यासो श्रोतरि गृह्यते, उपायत्वात् । एवं ज्ञानारोपश्च कैश्चिज्ज्ञात्यादीनामाश्रितः, स शब्दाध्यासनिरासेनैव तुल्यन्यायतया निरस्तो भवतीत्यपि वाच्यमिति पार्थसारथिर्व्याचख्यौ (१८३) । तदेवं भ्रान्तिरेवारोपः परमार्थतस्तु त्रिषु शब्दार्थज्ञानेष्वपि विलक्षणैव संविदित्याह -

गोत्वे सास्नादिमद्रूपाङ्गादिरूपाभिधायके ।

निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥ तत्रैव १८५.

केचित्तु जात्यादीनपह्नुत्य स्वरूपमेव शब्दानामभिधेयं स्वीकृत्य तस्यैव व्यक्तावारोपं मन्यन्ते, शब्दैक्यादेव च खण्डमुण्डादिष्वेकरूपतावगमो न जातिनिबन्धन इति मन्यन्ते । तेषाम्मतं प्रत्याह—

यदि चाभेदरूपेण शब्देनार्थः प्रतीयते ।

एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥ तत्रैव १८६.

अस्याशयः- शब्देनार्थप्रतीतिरभिन्नरूपैव, न तु जात्याद्यभिन्नरूपा । किन्तु एतन्न सम्भवति । अक्षशब्देन प्रतीयमानानां देवनेन्द्रियविभीत-काद्यर्थानामेकस्वरूपापत्तिर्भविष्यति, अक्षशब्देन त्रयाणामेवार्थानामभेदत्वात् । किन्तु त्रिष्वक्षपदबोध्येन्द्रियदेवनविभीतकेष्वेकरूपस्यानुस्यूतिर्न । अत आह-

त्रये विभीतकादीनां नैकधर्मान्वयोऽस्ति हि ।
शब्दः साधारणस्तेषां जातिशब्दाद् विलक्षणः ॥ तत्रैव १८८,
परस्परविभिन्नं तु ज्ञायतेऽत्राकृतित्रयम् ।
तदध्यासे न युज्यते तद्रूपस्याविभागतः ॥ तत्रैव १८९,

अत्राशयस्तु -गोशब्देन त्रिविधो बोधः -प्रथमस्तु, गोप्रभृतिशब्दात्मकः, द्वितीयो गवादिपदार्थरूपः, तृतीयस्तु गोत्वादिजातिरूपः । त्रय एव परस्परभिन्नाः । अत्र त्रयाणाम्परस्पराध्यासः स्वीक्रियेत तर्हि गवादिशब्देन विभिन्नाकारस्त्रिविधो बोधो न स्यात्, परस्पराध्यासत्वात् ।

नन्वत्र, इन्द्रियदेवनविभीतकार्थबोधकास्त्रयोऽक्षशब्दा भिन्नाः सन्ति, तर्हि सिद्धः शब्दाध्यासपक्षः । नैतद् भवितुमर्हति यद्येक एवाक्षशब्दः केवलेन्द्रियबोधकस्तर्ह्यक्षशब्दप्रयोगेऽन्ययोर्देवनविभीतकयोः संशयो न स्यात् । संशयस्तु समानधर्मत्वादुपपद्यते, प्रकृतेप्येकेनैव शब्देन त्रयाणां ग्रहणम् । अन्यत्तु 'अधुना येनाक्षशब्देनेन्द्रियस्य बोधः, प्राक् तेनैव शब्देन देवनविभीतकयोर्बोधोऽभवद्, इत्यत्रैतादृशी प्रत्यभिज्ञा भवत्येव, अतो न विभिन्नार्थबोधकाः शब्दाः भिन्ना इति सिद्धम् । उक्तं हि-

भिन्नाः स्युरक्षशब्दाश्चेन्नार्थे संशयदर्शनात् ।
सामान्यादृते स स्याद् रूपाभेदश्च गम्यते ॥ तत्रैव १९०,

एवमेव जयन्तेनाऽपि मीमांसकपक्षं तर्कसम्मतं मत्वा युक्तिरियं स्वग्रन्थे (पृ. १०१) न्यायमञ्जर्यां समुपन्यस्ता -'एवमिन्द्रियजेष्विव शाब्देष्वपि प्रत्ययेषु न शब्दः स्वरूपमध्यस्यतीति युक्तम्, यदि च शब्दः स्वरूपेणार्थं प्रतिपादयति, तदाऽक्षशब्दस्यैकादेवनविभीतकरथाक्षेषु तुल्या प्रतीतिः स्यान्न चाक्षशब्दाभिन्ना इति वक्तव्यम्, रूपप्रत्यभिज्ञाऽनपायात्तदुच्चारणे चार्थत्रय्यां संशयदर्शनाद्" इति ।

## (इ) शब्दाध्यासे दोषान्तरम्

भवतिप्रभृतिशब्देष्वाख्याततत्वधर्मो घटादिशब्देषु नामत्वधर्मः, तस्माद् नामाख्याततत्वाद् धर्माद् भिन्नप्रकाराः शब्दाः । यद्यत्र शब्दत्वरूपेण धर्मेण स्वार्थेष्वध्यस्ता इमे शब्दा इति स्वीक्रियते तर्हि नामाख्यातयोरेकार्थकतापत्तिः । किन्तु न समीचीनमेतत् । यथाहुः -

भवत्यादौ च भिन्नेऽपि नामाख्याततत्वसंज्ञया ।

रूपैकत्वेन चाध्यासे तुल्यार्थत्वं प्रसज्यते ॥ तत्रैव १९१.

एवमेव शब्दस्य निष्पन्नरूपताख्यातेष्वपि न भिद्यते अतस्तस्मिन् सिद्धरूपेऽध्यस्यमाने तिङन्तार्थस्य पूर्वापरीभूतता न स्यात् । अत एव जयन्तेनाभ्यधायि -''भवतिशब्दयोश्च सुप्तिङन्तयोस्तुल्यरूपत्वादध्यासपक्षे तुल्यार्थप्रतीतिहेतुत्वं प्राप्नोति, तथा च सिद्धसाध्यबुद्धिः संवेद्यमानापि निह्नूयेत' इति न्यायमञ्जर्य्याम् (१०१) ।

तथा च, केचिद् भर्तृहर्यादयो वैयाकरणाः शब्दस्य परिणामोऽर्थ आहोस्विच्छब्दस्य विवर्त्तोऽर्थ इत्याहुः । तेषां मतं समालोचने तथ्यमिदमवधार्यम् । अमूर्त्तस्य शब्दस्य मूर्त्तोऽर्थः कथं परिणामो विवर्त्तो वा स्याद् ? मूर्त्तानामेव हि क्षीरादीनां चन्द्रादीनां च मूर्त्तरूपो दध्यात्मकः परिणामः, प्रतिबिम्बरूपो वा विवर्त्तो दृश्यते । अतोऽर्थः शब्दस्य परिणामो विवर्त्तो वेति स्वीकृत्य शब्दार्थयोरध्यासोऽनुपपन्न एव । यथाहु :-

शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ।

कथं कथं च मूर्त्तार्थो वाचके मूर्त्तिवर्जिते ॥ तत्रैव १९२.

एवं जातिगुणाद्यपह्नवेन च शब्दरूप एवार्थेऽध्यस्यमानेऽयं जातिशब्दोऽयं गुणशब्द इत्यपि व्यवस्था न स्यात् । अतो विभिन्नार्थवाचकशब्देषु या विभिन्नतायाः प्रतीतिः सम्भवति, सा कथमुपपद्यते, अतोऽनुपपन्नः शब्दाध्यासः । उक्तञ्च-

गवाश्वशुक्लशब्दादेर्वाच्यरूपानपेक्षणे ।

वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥ तत्रैव १९३.

इत्यपि न्यायमञ्जर्य्याम्प्रमाणत्वेन गृहीतम्- ''शब्दस्य सिद्धरूपत्वा-त्तदध्यासेनार्थबुद्धाविष्यमाणायां यजेत दद्याज्जुहुयादित्यादौ न क्वचित्सा-

ध्यबुद्धिर्भवेत्सिद्धाध्यासेन साध्यबुद्धेरननुरूपत्वात्, जातिगुणक्रियाशब्दाश्च गौः शुक्लो गच्छतीत्यादयः केन कारणेन नियतमध्यासमनुरुन्धत इति नावगच्छामः'' इति (पृ.१०१)।

## (उ) शब्दाध्यासवादे विशेषणविशेष्ययोः प्रतीतिर्न

वृक्षप्लक्षशब्दयोः घटादिभिरर्थैः सह भेदो व्यवतिष्ठते, तथापि भेदे सत्यपि 'प्लक्षोऽयं वृक्षः' इति वाक्ये प्लक्षे विशेषणतायाः वृक्षे विशेष्यतायाः प्रतीतिः कथमुपपन्ना स्यात् ? शब्दैस्तु स्वाभिन्नस्वरूपावबोध एव सम्भवति, तत्र तु जातिप्रभृतीनामनपेक्षा तिष्ठति (तत्रैव १९४)। तस्माज्जयन्तोऽपि समर्थयामास -''शब्दस्यार्थानपेक्षनिसर्गशुद्धवैश्वरूप्यकल्पनाबीजाऽभावात् प्रतिनियतशब्दवृत्तेश्च कस्यचिल्लक्ष्मणोऽनुपलक्षणात्, वृक्षप्लक्षशब्दयोश्च घट-पटशब्दयोरिव स्वरूपभेदाविशेषादर्थानपेक्षित्वाच्च विशेषणविशेष्यभावसामाना-धिकरण्ये शब्दाध्यासवादिनो न भवेताम्, न ह्येकत्र वस्तुनि वाच्ये क्वचिदनयोः शब्दयोर्वृत्तिः इति न्यायमञ्जर्य्याम् (पृ. १०१)।

सामानाधिकरण्ये च नीलोत्पलादिषु वाचकबुद्ध्योरिवार्थबुद्ध्योरपि न स्यात्, वाचकस्यैव वाच्यत्वात्, तयोश्च भेदादेकविषयत्वाभावाद् एकविषयत्वाधीनत्वाच्च सामानाधिकरणस्य । ननु जात्यादिवादिनामिवो-क्ताभेदरूपसामानाधिकरण्यस्योपपत्तिरेकस्वलक्षणविषयबुद्धिजनकतया स्यात् । एवं तथैव शब्दः शब्दस्य वाच्य इत्यपि स्यात् । न भवति, एकस्यां निर्विकल्पकबुद्धौ बुद्धिद्वयस्योपसंहारो यथा नीलोत्पलशब्दयोरभेद-रूपसामानाधिकरण्यस्य प्रतीतिर्न तथैव तद्वाच्यार्थयोरपि, उक्तसमानाधिकरण्यस्य प्रतीतिर्नेति सिद्धम्। यथा तर्कयामास कुमारिलभट्टः-

सामानाधिकरण्यं च न स्याद् वाचकबुद्धिवत्।

एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके ॥ श्लोकवार्त्तिके प्र. सू. १९५,

यदि च वस्तुमात्रे शब्दप्रयोगे कृतेऽप्युक्ताभेद-रूपसामानाधिकरण्यप्रतीतिरुपपन्ना, तर्हि सर्वेषां गवादिशब्दानां वस्तुविषयत्वादेकवाच्यता स्यात् (तत्रैव १९६)।

यदि च यत्रासाधारणे नीलोत्पलादिशब्दयोः प्रयोगो दृष्टः, तथैव साधारणेऽर्थे तयोः प्रयोगः, तथा सति अस्मिन्नदृष्टप्रयोगे प्रथमप्रयोग

एवानुपपन्नः स्यात् (तत्रैव १९७) । न च भवता नीलोत्पलं नाम जातिरिष्यते, येन निबन्धनेन नीलोत्पलशब्दप्रयोगोपपत्तिः स्यात्, न च नीलोत्पलं नामजातिकल्पनासम्भवा, शब्दयोरर्थयोश्च जातिगुणभेदावगमात् निष्प्रमाणकत्वाच्च (तत्रैव १९८) । अत एव मीमांसकपक्षं स्वीकुर्वता न्यायमञ्जर्यां (पृ. १०१) जयन्तभट्टेन समाकलितम् - ''न नीलगुणविशेषितमुत्पलं नाम किञ्चिदस्ति विशेष्यम्, अपि तु तन्निरस्तावयवार्थमश्वकर्णादिवदर्थाऽन्तरमेवेदं व्युत्पत्तिप्रकारमात्रं तु विशेषणविशेष्यभाववर्णनमिति, तदेतदसमीचीनम्, अनुभूयमानावयवार्थप्रतीतिनिह्नवनिमित्तानुपलम्भात् अश्वकर्णादौ हि युक्तमर्थान्तरत्वं तत्र हि नाश्वार्थो न कर्णार्थः, निरवयववाक्यार्थवादश्च प्रागेव विस्तेरण निरस्तः'' 'इति ।

किञ्च नीलोत्पलवदेव करहस्तशब्दयोरपि भिन्नयोरभेदस्वरूपसमानाधिकरणप्रतीतिः शब्दाध्यासवादिनां स्यात् यद्यपि करहस्तशब्दौ भिन्नौ, तथापि एकस्मिन् हस्तरूपेऽर्थे शब्दद्वयस्याभेदप्रतीतिजनकत्वात्, करहस्तौ, इत्यादिवाक्येषु पुनरुक्तिदोषो न सम्भवति शब्दाध्यासवादिनाम् (श्लोकवार्त्तिकम् प्र०सू० १९९) । अत्र तु न्यायमञ्जर्यां (पृ. १०१) तार्किकवरेण भट्टजयन्तेन सनिपुणं समुपस्थापितम्-

''अथ शब्दाद्वयाभ्यासनिबन्धनमेव सामानाधिकरण्यं वृक्षः वृक्ष इत्युच्यते, तदपि न चारु, वृक्षस्तरुरिति पर्याययोरपि तत्सम्भवे सति सामानाधिकरण्यप्रसङ्गात् । अपि च पर्यायेषु हस्तः कर : पाणिरित्यादिषु शब्दरूपभेदाध्यासपक्षेऽर्थबुद्धिभेदः प्राप्नोति, न चासावस्तीति नाध्यासः'' इति ।

### (ऋ) अर्थज्ञानाभावेऽपि शब्देन श्रुतेन स्मरणरूपापत्तिः

किञ्च सम्बन्धग्रहणापेक्षः शब्दः, सम्बन्धग्रहणकाले कीदृशेनार्थेन सह युज्यत इति निरूपणमशक्यं शब्दाध्यासवादिनाम्मतेन । तत्र तु कारणम्, सम्बन्धग्रहणकाले शब्दाभिन्नेऽर्थे प्रतीतिर्न सम्भवति, तदा त्वर्थो विशेषरूपेण गम्यते, तस्मिन् विशेषरूपेऽर्थे शब्दस्य सम्बन्धग्रहणमप्यसम्भवमानन्यात् । गृहीते सम्बन्धे शब्दात्मकतार्थस्य गम्यते न प्रागिति भावः (तत्रैव १९९-२०१) । गृहीतसम्बन्धो हि प्रत्यायकोऽयम् । तस्माद् योऽस्येदम्वाच्यमिति न जानाति, न तस्य शब्दार्थस्मरणं सम्भवति । अध्यासवादिनान्तु, भवेदेव स्मरणम्,

सम्बन्धग्रहणानपेक्षेषु वाचकेषु गृहीतेष्वेवार्थज्ञानाभ्युपगमाद् इति (तत्रैव २०२)। किन्त्वयुक्तमेतत्, दृश्यते हि लोकव्यवहारे यथाज्ञातशब्दानां वाच्ये तद्धीर्न जायते, तथैवाज्ञातवाच्यानामुपलब्धेऽपि वाचके धीर्न जायते इति, (तत्रैव २०४)। तस्मान्न शब्दरूपेणार्थोऽवगम्यते, यथावस्थितमेव त्वर्थरूपं शब्दः स्मारयतीति सिद्धम् इति (तत्रैव २०५)। अत एव न्यायमञ्जर्य्यां जयन्तेनापि युक्तिसम्मतमिदं मीमांसकमतमेव निपुणतयाम्नातम्— "किञ्च सम्बन्धग्रहणनिरपेक्षोऽपि शब्दः स्वसामर्थ्यमनुरुध्यमानः स्वाध्यासेन बुद्धिं विदध्यात्, तदपेक्षायां कस्य केन सम्बन्ध इति न बुध्यामहे, शब्दार्थस्य पृथग्व्यवस्थितात्मनस्तन्मते दुर्लभत्वात्, शब्दव्यतिरिक्तार्थोऽपगमे वा किमनेन शब्दाध्याससमर्थनाडम्बरेण विरम्यतामतो मृगतृष्णानुसरणरणरणकात्" इति (पृ. १०१)।

## (लृ) अध्यासस्यानुपपत्तिः

अध्यासः क्वचित् सादृश्यात् प्रतिभाति, यथा शुक्ताविव रजतस्य, रज्जाविव सर्पस्य। स क्वचित्त्वनुरागात् प्रसज्यते लाक्षया इव स्फटिके। तस्माद् शब्दार्थयोर्मूर्त्तामूर्त्ततयातिदूरभिन्नस्वरूपयोः सादृश्यमनुपपन्नम्। एवमेव अनुरागोऽपि तत एव दुर्घटः पृथग्देशत्वाद् भिन्नेन्द्रियग्राह्यत्वाच्च। यदि च दूरस्थोऽपि शब्दोऽर्थे, चन्द्र इव जले प्रतिबिम्बितो गृह्यते, तावत्तस्य प्रत्याख्याने युक्तिरियं स्फुरति चक्षुग्राह्याणां रूपवतामेव प्रतिबिम्ब इति कुमारिलः श्लोकवार्त्तिके प्रत्यक्षसूत्रे प्रतिपादयाञ्चकार (तत्रैव २०९-१२)। भट्टजयन्तेनात्र न्यायमञ्जर्य्यां (पृ.१०२) रुचिरवर्णनं कृतम्-

"प्रतिबिम्बवर्णनमपि न सुन्दरम्, दूरदेशत्वेन शब्दार्थयोः प्राप्तेरभावादप्राप्तयोश्च प्रतिबिम्बोदये द्वारकोद्याननिवासिवासुदेवसुन्दरीवदनतामरसानि सागरतरङ्गपवनपरिचयचलदलकलतिकालाञ्छितानि स्वच्छेषु ज्योत्स्नावदातद्युतिषु तुषारगिरिगह्वरगततुहिनशिलाकर्पूरदर्पणेषु प्रतिबिम्बितानि दृश्यरेन्।

अथ सर्वगतत्वेन शब्दानामर्थदेशे प्राप्तिरभिधीयते, तर्हि सकलशब्दसार्थसाधारण्यादत्यन्तमध्याससाङ्कर्यमनवधार्यमाणविशेषनियमकारणमापद्यते, इत्यलमतिप्रसङ्गेन सर्वथा न सम्बद्धः शब्दाध्यासवादः"।

### (ए) विशेषणविशेष्यभावोपपत्त्यर्थ नाध्यासोऽङ्गीकार्यः

परमार्थतस्त्वध्यासो नास्ति, मीमांसकमतेन । अतो जगदिदं सत्यम्, यथा कुमारिलेनोक्तम् -

यदा तु यादृशः पिण्डः पूर्वं शब्दात् प्रतीयते ।

तादृशस्मरणे हेतुः शब्दस्तत्र यथार्थता ॥ श्लोकवार्त्तिकं प्र.सू. २२६ ।

''सम्बन्धावगमवेलायां ततः प्राक्काले च यादृशमर्थरूपं, तादृशमेवशब्दः स्मारयति न त्वात्मानमर्थेऽध्यस्यतीति'' तत्रैव न्यायरत्नाकरे पार्थसारथिर्व्याचख्यौ । ''कथं तर्हि गौरयं शुक्लो गच्छतीति डित्थोऽयमिति च सामानाधिकरण्यम्, जातिशब्दस्तां जातिं स्मारयित्वा तथा तादात्म्येन व्यक्तिं बोधयन्नुपस्थितव्यक्तिबोधकेन 'अयम्' इत्यनेन सामानाधिकरण्यं भजते । तथा गुणशब्दः क्रियाशब्दश्च । डित्थशब्दोऽपि यस्य पिण्डस्य वाचकत्वेन प्रागवगतस्तं स्मारयित्वा तत्तादात्म्येन पुरस्थितं पिण्डं विकल्पयति न तु स्वात्मना । न हि डित्थेऽयमित्यस्यायमर्थः । डित्थशब्दोऽयमिति । किं तर्हि ? डित्थ इति नामास्येत्यर्थः -योऽसौ चैत्रे मास्यस्माभिरुज्ञयिन्यामुपलब्धो डित्थः सोऽयमिति । तेनात्राऽपि न शब्दस्वरूपमर्थस्य विशेषणम्, किन्तु पूर्वानुभूतार्थस्मरणोपयोग्येव । तत्रापि शब्देन पूर्वावगतव्यक्तितादात्म्येन पुरःस्थिता व्यक्तिर्विशेष्यते । अत उपचारसत्तामाहोस्विद् अध्यासं विना सामानाधिकरण्यं, सूपपद्यते, विशेषणविशेष्यभावश्चार्थमुखेनैव सम्भवतीति निष्प्रमाणकोऽध्यासः'' इति सिद्धम् । एतेन भट्टकुमारिलविवेचनेन पार्थसारथिव्याख्यानेन तथा च न्यायमञ्जरीकारस्य ग्रन्थोद्धरणेन बाह्य एवार्थः सिध्यति । अध्यासादिनामसिद्धत्वाद् बौद्धार्थवादोऽपि सर्वथा निराकृतः सिध्यतीति सुधीभिः विभावनीयम् । तथा च नैयायिकोक्तः शक्तिग्रहाधीनोऽभिधानाभिधेयनियमरूपः सम्बन्ध एव शब्दार्थयोर्युज्यत इति लोकानुभवसाक्षिको नैयायिकपक्ष एव साधीयान्, इति निष्कर्षः ।

## ७. अद्वैतवेदान्तिनां 'घटोऽस्ति' इत्यस्योपपत्तिप्रदर्शनस्य खण्डनम्

न्यायशास्त्रे प्रसिद्धः 'तर्ककुतूहलं' नाम ग्रन्थः, अयं पं. विश्वेश्वरपाण्डेयद्वारा रचितः । अस्य सर्वथा नवीनो मौलिकः स्तुत्यार्हश्चायं प्रयासो यत् श्रुतिवाक्यानामद्वैतपराणां वेदान्तिभिः कृतस्यार्थस्य युक्तियुक्तं

खण्डनं विधाय तेषामेव वाक्यानां नैयायिकदृष्ट्या द्वैतपरकोऽर्थोऽनेन प्रदर्शितः। एतदालोचने प्रसङ्गादागतानां बौद्धार्थवादिवैयाकरणानां विषयाणामपि विस्तेरण विवेचनं विहितम्। अतः शोधोपयोगितत्त्वविवेचनाऽपि स्थालीपुलाकन्यायेनानुपदमेवोदाह्रियते इति। यदुक्तम् - ''यत्तु प्रत्यक्षमेव मिथ्यात्वे घटोऽस्ति' इत्यादावस्तित्वशाब्देन ब्रह्मसत्तायां प्रतिपन्नस्य घटादेर्घटो नास्तीति प्रत्यक्षेण तस्यामेवाभावावगाहनमिति विवरणोक्तेः, स्वसमानाधिकरणस्यावच्छिन्नवृत्तिकात्यन्ताभावस्य प्रतियोगित्वं हि मिथ्यात्वम्'' इति तर्ककौतूहले सप्तमेंऽशे पूर्वपक्षं संस्थाप्य सम्यक् खण्डनं चकार तार्किकधुरन्धरः। किञ्चित् स्थलमेव लिख्यते- ''घटोऽस्ति इति ज्ञानानन्तरं जायमाने घटो नास्तीति ज्ञाने अस्तित्वांशे घटतदभावयोर्भाने बाधकाभावात्। प्रत्यक्षज्ञाने शब्दव्युत्पत्तिविरोधासंभवात्। तत्त्वज्ञानां प्रपञ्चाधिकरणत्वेन गृह्यमाण एव तदभावप्रत्यक्षाच्चेति, अत्रोच्यते -

अस्तिनास्तीति धीर्भावाभावसत्तां विगाहते।
नार्थभेदो दवीयान्स्यादुल्लेखोल्लिख्यमानयोः॥

उक्तप्रत्यक्षस्य तदुक्तार्थविषयकत्वे मानाभावः। घटोऽस्ति घटो नास्तीत्यस्य च क्रमेण घटे सत्तामभावप्रतियोगित्वं चावगाहमानत्वात्। घटे सत्ताश्रयत्वविषयकप्रत्यक्षेण सत्तायां घटाधिकरणत्वं सत्ताविरहावगाहिना च प्रत्यक्षेण सत्तायां घटाभावाधिकरणत्वमबगाह्यत इति कल्पनस्य विवर्जितत्वात्। सत्ताया ब्रह्ममात्रधर्मत्वस्य चासिद्धेः। प्रत्यक्षेण च घटादिनिष्ठतयैव तद्ग्रहेण वैपरीत्यात्। सत्ताया घटादिनिष्ठात्यन्ताभावप्रतियोगित्वसिद्धावपि हि तत्प्रतीतेर्भ्रमत्वमेव स्यात्। न तु सत्ताया घटाधिकरणत्वविषयकत्वम्। न तु 'घटोऽस्ति' इति शब्देन तथा बोधेऽपि तदुल्लिख्यमानप्रत्यक्षस्य यथोक्तविषयकत्वमेवेति वाच्यम्। घटप्रकारकभूतलविशेष्यकसंयोगसंसर्गकप्रत्यक्षस्य घटसंयोगप्रकारकभूतलविशेष्यकसमवायसंसर्गकशाब्दधीजनकेन घटवद्भूतलमिति शब्देनोल्लेखेऽपि घटावृत्तिभूतलमित्यादिशब्देनानुल्लिख्यमानत्वात्। अगत्या उल्लेख्यज्ञाने सांसर्गिकविषयतापन्नस्य प्रकारत्वेनोल्लेखकज्ञाने भानेऽप्यत्यन्तविप्रकर्षाभावात्। 'एतेन घटोऽस्ति' इति ज्ञानानन्तरमित्याद्यपि परास्तम्। अस्तित्वांशे घटतद्भावयोस्तदविषयत्वस्य सर्वानुभवविरुद्धत्वात्। फलतो मिथ्यात्वभानमित्यप्ययुक्तम्। घटो ब्रह्म, अधिकरणमभावः प्रतियोगि-

त्वमित्यादिवद्विशिष्टशरीरानवगाहिज्ञानस्य तदपर्यवसायित्वात्'' इति तर्ककुतूहले सप्तमेंऽशे (पृ. ३३३-३३४) निरूपितम् । तेन न बौद्धार्थसिद्धिरिति प्रमाणितम् ।

## ८. भावाभावसाधारणसत्तायाः प्रत्याख्यानम्

तथा च बौद्धार्थवादिभिर्या भावाभावसाधारणोपचारसत्ता कल्पिता, तयैव व्यवहार इति सिद्धान्तितम् । यथा हेलाराजो वाक्यपदीयटीकायां (३/३/४०) लिखति -''एवं चानयैव सत्तया पूरिते वाग्व्यवहारे यद्यर्थक्रियाकारणादिना काष्ठबुसप्रायेण केनचिन्निबन्धेनान्यसत्ता कल्प्यते तद्वर्धतां सा न तत्र चिन्तास्माकम्, व्यवहारे तु तस्या नास्त्यनुप्रवेश'' इति । एवमेव केवलबौद्धसत्तया व्यवहारसिसाधयिषूणां मतं खण्डयद्भिस्तर्ककुतूहलस्यैकादशेंऽशे (पृ.४०४) शाब्दिकवरैः पाण्डेयमहोदयैरुक्तम्-'' एतेन यदुक्तं भिन्नसत्तेत्यादिना प्रतिवादिनो लालनमेव कृतं न तु मत्सिद्धान्ते भावाभावयोर्विरोधो निष्प्रयोजनत्वादिति तदपास्तम्, युक्त्यनुभवसिद्धार्थस्य शपथमात्रेणापह्नोतुमशक्यत्वादत्राप्यन्योऽन्याश्रयादिदोषाच्च । तथा हि मिथ्यात्वानुमानसिद्धौ सत्ताभेदसिद्ध्या स्वान्यूनसत्ताकेत्यादिरूपभ्रमत्वसिद्धौ विरोधज्ञानानावश्यकत्वम्, विरोधानावश्यकत्वे च बाधकाभावान्मिथ्यात्वानुमितिसिद्धिरिति । अहोऽसिद्धघटितमेव सर्वं भवदीयम् । अतो न द्वैतवादिनां किञ्चिदपि भयम् । तथा च—

तृणबाणास्तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ।
कथमिह कुरङ्गशावक केदारे कलमञ्जरीं त्यजसि ॥

इति न्यायोप्यत्र सुलभः'' इति । एवमेव न केवलैकस्य, अपि च प्रायः सर्वेषामद्वैतसिद्धान्तानां नैयायिकदृष्ट्या सयुक्तिकं खण्डनं तर्ककुतूहले समाहितम् । प्रकृते शोधविषये विस्तरभिया नोपयुक्तत्वान्न समालोच्यते ।

## ९. निष्कर्षः

न्यायसूत्रभाष्यकृतां सौगतसम्मतबौद्धार्थस्य प्रत्याख्यानं विचारणीयं सुधीभिः । प्रमाणविप्लववादिनः सौगता अप्यर्थो बौद्ध इति स्वीकुर्वन्ति, तैरपि शब्दाद्वैतवादवच्छब्दार्थयोः कार्यकारणभावसम्बन्धः प्रकल्पितः । न

कार्यकारणभावसम्बन्धः समञ्जस इति प्रमाणितं तथ्यम् । तथा च वृद्धकुमारिलेनापि शब्दाध्यासवादस्य खण्डनं कृतं, तेन बौद्धार्थस्य खण्डनमपि भवति । मीमांसकमतमनुसरता तार्किकजयन्तभट्टेन यद्विवेचनं विशदमकारि, तदपि विचारणीयम् । तथा च वैयाकरणसिद्धान्त-सुधानिधिकारपण्डितविश्वम्भरपाण्डेयेन यद् भावाभावसाधारणोपचारसत्तायाः प्रत्याख्यानं व्यधायि, तेनापि बौद्धार्थः प्रत्याख्यातो भवति । अतो नैयायिकमीमांसकप्रतिपादितो बाह्य एवार्थः सुधीभिः निर्मत्सरैराकलनीयमिति निष्कर्षः ।

---

सप्तमं पर्यालोचनम्

# मुनित्रयसम्मतेन बाह्यार्थेनैव शास्त्रप्रक्रियानिर्वाहः इति सिद्धान्तः

अस्तु ग्रन्थस्यास्य पूर्वोक्ताध्यायेषु प्रकृतविषये प्रायेण न्यायदृष्ट्या व्याकरणदृष्ट्या चापि बौद्धार्थः (उपचारसत्ता) केनाऽपि शब्दप्रमाणेनानुमानेन वा मुनित्रयसम्मतो न सिध्यति । अतो बौद्धार्थस्य क्लिष्टकल्पनां कृत्वा याऽभीष्टसिद्धिर्बौद्धार्थवादिभिः प्रदर्शिता, सा न कथमपि विचारसहा, तस्मादस्माभिः प्रत्याख्याता । सिंहावलोकनन्यायेन पूर्वोक्ताध्यायेषु विमर्शितानि तत्त्वानि संक्षेपतो निरूप्यन्ते ।

१- प्रथमपर्यालोचने- अर्थो बौद्ध इति पूर्वपक्षं संस्थाप्य महर्षिपाणिनिमतेनार्थस्य स्वरूपं विचार्य, तत्र बाह्य एवार्थ इति तेषां सूत्राणां विवेचनेन प्रमाणितम् । तथा च न्यायव्याकरणमते शशशृङ्गादिपदानां प्रातिपदिकत्वसिद्धये बौद्धार्थो नाङ्गीकार्य इत्यपि विवेचितम् । भट्टनागेशपादैर्यत्र क्वचिच्छशशृङ्गादौ प्रातिपदिकसंज्ञासिद्धये बौद्धार्थस्य क्लिष्टकल्पना कृता, सा कथमपि न विचारसहा, प्रत्युत नैयायिकमतेन शशशृङ्गादिपदानां बाह्यार्थस्याभावेऽपि बाह्यजगत्येकत्र शशो दृष्ट, अन्यत्र बाह्य एव जगति गवादिषु शृङ्गमुभयं बुद्धिविषयमेकीकृत्य विशिष्टार्थप्रतिपादनाय विशिष्टार्थलक्षकं शशशृङ्गादिपदं स्वीकृत्य प्रतिपादिकसंज्ञा निर्बाधा सिध्यति ।

यद्वा महावैयाकरणकौण्डभट्टदर्शितरीत्या शक्त्यैव प्रतिपादिकसंज्ञायाः कर्तुं शक्यत्वाद् बौद्धार्थस्य बौद्धशब्दस्य वा न कथमपि कल्पना करणीया भवति । यद्यपि वाक्यपदीये उपचारसत्ता भर्तृहरिणोक्ता, किञ्चास्मन्मते न सा

व्याकरणशास्त्रानुसारेणाष्टाध्याय्यां स्वीकृता । पाणिनिमतेनार्थस्वरूपं बाह्यमेवेति निरूप्य तत्रैव कानिचित् पाणिनिसूत्राणि सविवरणानि समुद्धृतानि, तैः सूत्रैर्लोकत एव बाह्यजगति बाह्यार्थवाचका एव शब्दाः, अतः शब्दा अर्थाश्च बाह्या एव पाणिनेरभीष्टा आसन्निति बौद्धार्थपक्षं समालोचयद्भिरस्माभिः संक्षेपत एव प्रतिपादितम् ।

२- द्वितीयपर्यालोचने- भगवतो महाभाष्यकारस्य बाह्यार्थोऽभिमतो बौद्धार्थोऽनभिमतश्चेति तर्कैरुद्धरणैर्लोकप्रमाणैश्च सिद्धान्तितम् । बौद्धार्थवादिभिः शाब्दबोधस्य यो विषयो निरूपितस्तस्य खण्डनं विधाय त्रिमुनिसम्मतो लोकप्रमाणसिद्धो बाह्य एवार्थ इति संपुष्य महाभाष्याश्रितानां बौद्धार्थवादिनां युक्तीनां समीक्षणं हित्वा महाभाष्यकारस्य न कुत्रापि बौद्धार्थेऽभिरुचिरित्यपि प्रस्तुतम् ।

भगवद्भाष्यकारमते बाह्यार्थ एव वास्तविकः शब्दार्थानुशासनप्रक्रियायाम्, न बौद्धार्थ इत्यत्र तत्तत्स्थलीयभाष्योद्धऽरणैः बौद्धार्थं प्रत्याख्याय बाह्यार्थ एव भाष्याशय इति प्रतिपादितम् ।

३- तृतीयपर्यालोचने- वाक्यपदीयमाधारीकृत्य भर्तृहरिसम्मतः शब्दार्थयोः कार्यकारणभावादिसम्बन्धोऽर्थस्य सत्ताद्वयं च विचारितम् । तत्रैवाङ्कुरो जायते, वृक्षोऽस्ति, वृक्षो नास्ति, इत्यादयः प्रयोगा अर्थस्योपचारसत्तास्वीकारं विना न भवितुमर्हन्तीति बौद्धार्थवादिनां भर्तृहर्यादीनां मतं प्रत्याख्यातम् । अङ्कुरो जायते, इति प्रयोगाणां बाह्यार्थसत्तास्वीकारेणाऽपि साधुता सिध्यति, प्रयोगाश्च सङ्गच्छन्ते । तस्माद् वैयाकरणैः नैयायिकैश्चोपचारसत्ता न स्वीकरणीयेति सविस्तरं निरूपितम् ।

४- तुरीयपर्यालोचने- हेलाराजसमर्थितबौद्धार्थवादस्य निरासः कृतः, तथा च मञ्जूषायां प्रदीपोद्द्योतयोश्च यद्यत्सूत्रभाष्यं बौद्धार्थसाधकत्वेन समुपन्यस्तं, तत्तद्भाष्यविवरणपूर्वकं तत्तत्सूत्रभाष्येण न कथमपि बौद्धार्थसिद्धिर्भवति, प्रत्युत भाष्यप्रतिपाद्यविषयं दूरे विहाय स्वाभीष्टबौद्धार्थसाधकतयान्यथा व्यचक्षाणाः कैयटनागेशादयः प्रत्याख्याताः । तथा च, भर्तृहरिस्वीकृतोपचारसत्ता न व्याकरणशास्त्रविषयिणी, इत्यत एव प्रमाणभूतैर्भट्टोजिदीक्षितैः शब्दार्थविचारे न क्वापि नामतोऽप्युक्ता । कौण्डभट्टेन तु बृहद्वैयाकरणभूषणे सारे च शशशृङ्गादीनामुचारसत्तास्वीकारं विनैव

प्रातिपदिकत्वं दर्शितम् । अतो बौद्धार्थसत्ता (उपचारसत्ता) न मुनित्रयसम्मता, न च तद्व्याख्यातृसम्मतेत्यप्युक्तम् । तत्र काशिकान्यासयोरपि न क्वाप्युपचारसत्ताङ्गीकृता । अतः प्रकरणवशाच्छास्त्रान्तरीयसिद्धान्तेष्वपि वैयाकरणानां प्रवेशाय भर्तृहरिणा स्वीकृतोपचारसत्ता न व्याकरणशास्त्रोपयोगिनीति सुतरां साधितम् । हेलाराजकैयटनागेशादयस्तु शास्त्रान्तरीयवासनयाऽथवा व्याकरण एव सर्वे शास्त्रान्तरीयविषयाः सन्निविष्टा इति प्रौढ्या साधयितुमुपचारसत्तां स्वीकुर्वाणा दृश्यन्ते । किञ्च नैतन्न्याय्यम् । तथा च बाह्यपदार्थस्यातीतानागतकालेषु बुद्धिविषयत्वलक्षणसम्बन्धेन बुद्ध्यारूढानां बाह्यार्थानामेव घटपटादीनां ग्रहणं वर्तते, तत्तद्देशकालानुसारं बाह्यपदार्थानां प्रयोगकाले सत्तावश्यकी नास्ति । बुद्धिविषयतयैव वर्तमानकालादिषु 'अस्ति, नास्ति, आसीत्, भविष्यति' इत्यादयः प्रयोगाः सुतरां सिध्यन्ति । अतो व्याकरणन्यायदृष्ट्या बौद्धसत्ता न कल्पनीयेति निर्णीतमस्माभिः ।

५- पञ्चमपर्यालोचने- श्रीमता नागेशभट्टेन मञ्जूषायां शब्दार्थौ बौद्धौ एवेति भूयः प्रपञ्चितम् । तत्सर्वं शास्त्रान्तरवासनाफलम् । न शब्दार्थौ बौद्धौ इति कथमपि सिध्यतीत्युक्तम् । तथा चोपचारसत्तां विना न पदार्थः सत्तां व्यभिचरतीति सिद्धान्तानुसारं 'वृक्षोऽस्ति, वृक्षो नास्ति' इति प्रयोगौ न संगच्छतः, बाह्यसत्तायां स्वीकृतायां 'वृक्षः' इत्यत्र बाह्यजगति वृक्षस्यास्तित्वमस्त्येवेत्यस्ति क्रियाप्रयोगो न सङ्गच्छते । बाह्यजगति वृक्षस्य सत्तायां सत्यां वृक्षो नास्तीति प्रयोगः सुतरामसङ्गतो भवति । अतोऽर्थानामुपचारसत्तास्वीकारेणैव 'वृक्षोऽस्ति' 'वृक्षो नास्ति' इति प्रयोगौ सङ्गच्छत इति कैयटनागेशयोः कथनं तर्काद्दूरापेतम् । वस्तुतो बाह्यजगति सत्यस्य वृक्षस्य तत्तद्दैशिककालिकसम्बन्धाभ्यां वृक्षोऽस्ति, नास्तीति' प्रयोगौ सुतरां सङ्गच्छतः । अत्रैव नञस्तत्तद्देशकालयोर्निषेधे तात्पर्यं न निर्दिश्यमानस्य निषिध्यमानस्य वस्तुतः सर्वत्रात्यन्ताभावे तात्पर्यमित्यपि व्यक्तमुपपादितम् । प्रसङ्गवशाद् बौद्धार्थसत्ताखण्डनाय प्रमाणभूतं नैयायिकमतं समुपन्यस्तं, यथा हि शाब्दतरङ्गिण्यां सुस्पष्टमेव बौद्धार्थस्य खण्डनं कृतमस्ति, तद्यथावदुद्धृत्य बौद्धार्थः शब्दाद्वैतवादिभिः भर्तृहरिकैयटनागेशादिभिः बुद्ध्या प्रकल्पितो मिथ्यैव न तु वास्तविक इति साधितम् । बौद्धार्थास्वीकारेऽपि व्याकरणशास्त्रे न कोऽपि दोषः समापततीत्यतो बाह्यार्थेनैवाभीष्टसिद्धौ बौद्धार्थकल्पना निरर्थिकेति विविधैः प्रमाणैर्बौद्धार्थः प्रत्याख्यातः । न्याययोगवेदान्तसूत्रभाष्येणापि नागेशस्य मनोरथः खण्डित इत्यपि निरूपितम् ।

६- षष्ठे पर्यालोचने- न्यायपरम्परामवलम्ब्य शब्दार्थयोः सम्बन्धविचारे बौद्धार्थखण्डनं च विधाय जरन्मीमांसकभट्टकुमारिलमतेन भर्तृहरिसिद्धान्तितशब्दाभेदवादस्याध्यासस्य च प्रत्याख्यानं निर्दर्शितम् । तदनु तार्किकवरैर्जयन्तभट्टैर्युक्तिपूर्णं मीमांसकमतसमर्थनं समुपन्यस्तम् । यथार्थवादितार्किकमीमांसकानां पक्षो न्याय्यो युक्तिसिद्धः, तथा च बौद्धार्थस्यानुपयुक्तत्वमुक्तम् । उपचारसत्ताखण्डने तर्ककौतुहलादिग्रन्थानामुद्धरणानि सविशेषं विचारणीयानि सन्ति ।

## १. अत्र विशेषतोऽवधेयम्

आचार्यभर्तृहरिणैव व्याकरणतन्त्रे बौद्धार्थवादः प्रवेशितः । न चायं बौद्धार्थवादो मुनित्रयानुकूलः सिध्यति । तेषाम्मते बाह्य एवार्थो लोके शास्त्रे च गृह्यते । तथापि हेलाराजकैयटादिभिः बौद्धार्थवादः समर्थितः पल्लवितश्च, परं च न तैर्नवीना युक्तिः प्रदर्शिता । भर्तृहरिप्रयुक्तयुक्तीनां व्याख्यानमात्रं कृतम् । भट्टोजिदीक्षितकौण्डभट्टन्यासकाराणां मते विनाऽप्युपचारसत्तया वैयाकरणानामर्थप्रक्रियायाः शब्दप्रक्रियायाश्च निर्वाहः संभवति ।वैयाकरणधुरन्धरेण नागेशेन बौद्धार्थस्य संस्थापनाय बाह्यार्थस्य प्रत्याख्यानाय प्रयासः कृतः, तद्विशेषविवरणं पञ्चमाध्याये कृतम् । नागेशेन भर्तृहरिहेलाराजकैयटादीनां पूर्वप्रयुक्तयुक्तीनां प्रमाण्येन स्वग्रन्थो विरचितः । युक्तिस्थापनायां तस्य विशेषावदानं यच्छशशृङ्गादिपदानां बाह्यार्थाभावे न प्रातिपदिकत्वम् । परन्तु वैयाकरणपरम्परायामत्र कौण्डभट्टस्य समाधानमुचितम् । न्यायनये लक्षणया निर्वाहः संभवति । आपतञ्जलितः सर्वे वैयाकरणा अर्थवत्पदस्य द्वितीयसूत्रेऽनुवृत्तिं स्वीकुर्वन्ति । अतः कौण्डभट्टस्यार्थवल्लक्षणं "लोके प्रतीतिजनकत्वं" समीचीनं प्रतिभाति । नागेशेन कौण्डभट्टकृतमर्थवद्व्याख्यानं विहाय, यद्बौद्धार्थसाधकं व्याख्यानं विहितं तदसमीचीनमिति प्रथमाऽध्याये निरूपितम् । न्यायमतानुसारेणार्थवद् इति पदस्यानुवृत्तिमनङ्गीकारेणापि प्रक्रियानिर्वाहः सुतरां सिध्यति । तच्च न्यायकौस्तुभे विस्तरेण समाकलितम् । भर्तृहरिणा सत्ता द्विधेति स्वीकृत्य बाह्यार्थोऽपि स्वीकृतः । न च तत्र मुख्यासत्तां विना व्याकरणशास्त्रस्य शब्दप्रक्रिया वार्थप्रक्रिया संभवति । परं च तन्मते, उपचारसत्तां विनाऽपि शब्दार्थप्रक्रियानिर्वाहं कर्तुं न शक्नुम इति उपचारसत्ताया अपरिहार्यता सिध्यति । तथा च नागेशेन सर्वथा बाह्यार्थस्य

निषेधः समुद्घोषितः तन्मते तु केवलेन बौद्धार्थेनैव शास्त्रप्रक्रियानिर्वाहः संभवति । परन्त्वनुभवयुक्तिविरोधेन विफलस्तस्य प्रयास इति सम्यक्तयाऽस्माभिः प्रतिपादितः । अस्माकमत्र प्रयासः, विनाऽप्युपचारसत्तया (बौद्धार्थेन) सम्प्रतिसत्ता, भूतसत्ताऽनागतसत्तेति महाभाष्यकारपतञ्जलिसम्मतसत्ताश्रयणेन शास्त्रप्रक्रियानिर्वाहः संभवति । परोक्षस्थले बुद्धिविषयतयैव निर्वाहः कर्तव्यः । अस्माभिः प्रदर्शितरीत्या विना बाह्यार्थेन न प्रक्रियानिर्वाहः संभवति, परन्तूपचारसतायामनङ्गीकृतायामपि प्रक्रियानिर्वाहः, सम्यक्तया संभवति । अतोऽस्माकं रीत्यैकेन बाह्यार्थेनैव सकलव्यवहारसिद्धिः, अतो लाघवात् कौण्डभट्टादीनामनुसृतो बाह्य एवार्थ इति वैयाकरणमार्गः सुधीभिः समर्थनीय इति निष्कर्षः ।

प्रमाणसिद्धान्तविरुद्धमत्र, यकिञ्चनाभून्मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य महानुभावाः प्रसादमाधाय विभावयन्तु ॥ १ ॥
जानन्ति नैव बहवो हि परप्रयासं,
ज्ञात्वाऽपि हन्त कुटिला विमतिं भजन्ते ।
ते केचिदेव शशिकान्तमणिप्रभावाः,
येषां मनः परगुणैर्द्रवतामुपैति ॥ २ ॥
कामेश्वरि जगन्मातः सच्चिदानन्दविग्रहे ।
गृहाणार्चामिमां शाब्दीं प्रसीद परमेश्वरि ॥

---

# अनुशीलितग्रन्थपञ्जी


१- उदयनाचार्यः, आत्मतत्त्वविवेकः, केदारनाथत्रिपाठीद्वारा सम्पादितः, अनुवादितश्च हिन्दीभाषायाम्, वाराणसी, खीस्ताब्दे-१९८३ ।

२- ओझा, केदारनाथः, व्याकरणनिबन्धमाला, काशी, १९८१ ।

३- ओझा, मधुसूदनविद्यावाचस्पतिः, संशयतदुच्छेदवादः, आद्यादत्तठक्कुरेण, सम्पादितः, लखनऊ, १९२७ ।

४- खण्डदेवः (खी. १५७५-१६६५)- भाट्टरहस्यम्, पेरीसूर्यनारायणशास्त्रिणाम् खण्डदेवभावप्रकाशः, व्याख्यासहितम्, राजमुन्द्राई, १९८५ ।

५- चतुर्वेदी, डॉःकृष्णकान्तः, द्वैतवेदान्त का तात्त्विक अनुशीलन, नई दिल्ली, विद्या प्रकाशन मन्दिर १९८० (शोध-ग्रन्थः) ।

६- चतुर्वेदी चक्रवर्तीजगदीशः, पदपदार्थविभागपरिशीलनम्, वाराणसी, किशोर विद्या निकेतन, १९८० (शोध-ग्रन्थः) ।

७- वामनजयादित्यौ, (वि. ६८०-७०१), काशिकावृत्तिः, हरदत्तमिश्रस्य (१२ तमशताब्द्याः पूर्वे) पदमञ्जरी, जिनेन्द्रबुद्धिकृता काशिकाविवरणपञ्चिका व्याख्याद्वययुता, वाराणसी, रत्ना पब्लिकेशन्स, १९८५ (षड्भागेषु) ।

८- झा, दीनबन्धुः, (१८७८-१९५४) समासशक्तिदीपिका, दरभङ्गा, कामेश्वरसिंहदरङ्गासंस्कृतविश्वविद्यालयः, संवत् २०३३ ।

९- त्रिपाठी,डॉ. रामदेवः, भाषा-विज्ञान की भारतीय परम्परा और पाणिनि, पटना, बिहारराष्ट्रभाषापरिषद्, १९७७ (शोधग्रन्थः) ।

१०- त्रिपाठी, डॉ. रामप्रसादः, पाणिनीयव्याकरणे प्रमाणसमीक्षा' वाराणसी, वाराणसेयसंस्कृतविश्वविद्यालयः, १९७२ (शोध-प्रबन्धः) ।

११- त्रिपाठी, रामसुरेशः, संस्कृतव्याकरणदर्शन , दिल्ली, राजकमल प्रकाशन (शोध-ग्रन्थः) १९७२ ।

१२- दीक्षितः भट्टोजिः (१५७०-१६५० वि.सं.) शब्दकौस्तुभः, रामकृष्णशास्त्रिणा सम्पादितः वाराणसी, चौखम्बासंस्कृतबुकडिपो, १८९८ ।

१३- देवनारायणमिश्रः,शब्दार्थ-विमर्श, मेरठ, साहित्यभण्डार १९८० (शोध-ग्रन्थः) ।

१४- द्विवेदी, ब्रह्मदत्तः, शब्दाद्वैतदर्शनबिन्दुः, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयः, १९८१ ।

१५- नाथः शालिकः ,वाक्यार्थमातृकावृत्तिः, ब्रह्ममित्रअवस्थीकृतहिन्दीव्याख्या, दिल्ली इन्दु प्रकाशन, वि. सं. २०३६ ।

१६- पतञ्जलिः, व्याकरणमहाभाष्यम्, कैयटस्य प्रदीपेन ,नागेशभट्टस्य उद्द्योतेन च विभूषितम् (पञ्चखण्डेषु) वेदव्रतेन सम्पादितम्, रोहतक, हरियाणासाहित्यसंस्थानम् गुरुकुल झज्झर, १९६२-६३ ।

१७- पाठकः, श्रीधरस्तथा च सिद्धेश्वरशास्त्री, पाणिनीयसूत्रपाठस्य तत्परिशिष्टग्रन्थानां च शब्दकोशाः, पूना, भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, १९३५ ।

१८- पाण्डेयः विश्वेश्वरपर्वतीयः (१६००-१६५० वि.सं.) व्याकरणसि-द्धान्तसुधानिधिः दधिरामशर्मणा सम्पादितः, वाराणसी, चौखम्बासंस्कृतबुकडिपो १९१४-१८ ।

१९- पाण्डेयः श्रीविश्वेश्वरः (१६००-१६५० वि. स.) तर्ककुतूहलम्, सम्पादितम्, जनार्दनशास्त्रिपाण्डेयद्वारा, वाराणसी, नित्यानन्दस्मारकसमितिः वि.सं. २०२८ ।

२०- पुणताम्बेकरः, महादेवः (ई.१७००) न्यायकौस्तुभशब्दपरिच्छेदः, वे. सुब्रह्मण्यशास्त्रिभिः परिष्कृतः संशोधितश्च तञ्जावूर, तञ्जावूरमहारा-जाशरभोजीसरस्वतीमहलग्रन्थालयः, १९८२ ।

२१- विजल्वानः, डॉ. चक्रधरः, भारतीय न्यायशास्त्र लखनऊ, उत्तरप्रदेशहिन्दीसंस्थान, १९८३ ।

२२- भट्टः, कुमारिलः (६५०-७००ई.सन्) मीमांसाश्लोकवार्त्तिकम्, पार्थसारथिमिश्रस्य न्यायरत्नाकरसहितम्, वाराणसी, रत्ना पब्लिकेशन्स १९७८, पं. दुर्गाधर कृतहिन्दीव्याख्यासहितम्, दरभङ्गा, कामेश्वरसिंहदरभङ्गा संस्कृतविश्वविद्यालयः १९७९ ।

२३- भट्टः, कौण्डः (१६ शताब्दी) वैयाकरणभूषणसारः, ब्रह्मदत्तद्विवेदिकृतहिन्दीभाष्यसहितः, हरिवल्लभस्य, दर्पणयुतश्च (१८००-१८५० वि.) वाराणसी, चौखम्बा ओरियण्टालिया, १९८५ ।

२४- भट्टः, कौण्डः (१६ शताब्दी) बृहद्वैयाकरणभूषणम्, मनुदेवभट्टाचार्यरूपाली टिप्पणी परिशिष्टादिभिः सह सम्पादितम्, वाराणसी, चौखम्बाअमरभारतीप्रकाशन, १९८५ ।

२५- भट्टः जयन्तः (नवमशताब्दी) न्यायमञ्जरी, पं. सूर्यनारायणशुक्लसम्पादिता, वाराणसी, चौखम्बासंस्कृत सीरिज आफिस, १९७१ ।

२६- भट्टः नागेशः (१७३०-१८१० वि.सं.) परमलघुमञ्जूषा, कालिकाप्रसादशुक्लस्य, ज्योत्स्ना टीकासहिता बड़ौदा, महाराजसयाजिरावविश्वविद्यालयः १९६१ (शोधग्रन्थः) ।

२७- भट्टः नागेशः (१७३०-१८१० वि.सं.) वैयाकरणासिद्धान्तपरमलघुमञ्जूषा, डॉ. कपिलदेवशास्त्रिहिन्दीव्याख्या सहिता कुरुक्षेत्र, विश्वविद्यालयप्रकाशन, १९७५ ।

२८- भट्टः, नागेशः (१७३०-१८१० वि.सं.) वैयाकरणसिद्धान्तमञ्जूषा, डॉ० कालिकाप्रसादशुक्लसम्पादिता, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९७७ ।

२९- भट्टः, नागेशः (१७३०-१८१० वि.सं.) वैयाकरणसिद्धान्तलघुमञ्जूषा, सभापतिशर्मणः, रत्नप्रभाव्याख्यासहिता (तात्पर्यनिरूपणान्ता) वाराणसी, चौखम्बासंस्कृतसीरिज आफिस, १९८३ ।

३०- भट्टाचार्यः, गदाधरः, (ई.१७०० प्रायः) व्युत्पत्तिवादः, बच्चाझाविरचित गूढार्थतत्त्वालोकसहितः (१९१७-१९७८ वि.सं.) सम्पादकः कीत्यार्नन्द झा, वाराणसी, कृष्णदास अकादमी, १९७६ ।

३१- भट्टाचार्यः गिरिधरोपाध्यायः (ई. १७२०) विभक्त्यर्थनर्णयः, (५ भागेषु) जीवनाथमिश्रन्यायतीर्थेण सम्पादितः, वाराणसी, चौखम्बा-संस्कृतसीरीजबुकडिपो १९०१-१९०२ ।

३२- भट्टाचार्यः, डॉ. रामशङ्करः, पाणिनीय व्याकरण का अनुशीलन, वाराणसी, इण्डोलाजिकलबुकहाऊस, १९६६ ।

३३- भट्टाचार्यः तारानाथतर्कवाचस्पतिः, शब्दार्थरत्नम्, कलकत्ता, जीवानन्दविद्यासागर १९०२ ।

३४- भट्टाचार्यः, म.म. हाराणचन्द्रः, कालसिद्धान्तदर्शिनी, डॉ. गौरी-नाथशास्त्रिसम्पादिता, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः १९८४ ।

३५- भर्तृहरिप्रणीतम् 'वाक्यपदीयम्' हरिवृषभकृतया स्वोपज्ञया वृत्त्या, पुण्यराजकृतया टीकया, हेलाराजविरचितया प्रकाशटीकया श्रीरघुनाथशर्मणा कृतया अम्बाकर्त्री व्याख्यया चालङ्कृतम्, वाराणसी, (पञ्चखण्डेषु) सम्पूर्णानन्दसंस्कृतविश्वविद्यालय : १९७६-८० ।

३६- भारतीय आचार्यों का भाषा चिन्तन, डॉ. पुष्पेन्द्रकुमारद्वारा सम्पादितः, दिल्ली, नाग पब्लिशर्स, १९८५ (डॉ. स्वामिनाथन् अभिनन्दन ग्रन्थः) ।

३७- भाषाशास्त्र के सूत्रधार (२ समाकलनः भाषा-संसार) प्रधानसम्पादकः डॉ. नगेन्द्रः नईदिल्ली नेशनल पब्लिशिंग हाऊस, १९८३ ।

३८- भासर्वज्ञः (८७५-९२५ई.) न्यायसारः, अपरार्कदेवस्य न्यायमुक्तावल्या आनन्दानुभवाचार्यस्य, न्यायकलानिधिना च समेतः मद्रास, राजकीयप्राच्यहस्तलिखितपुस्तकालयः १९६१ ।

३९- भासर्वज्ञः (८७५-९२५) न्यायभूषणम्, स्वामियोगिन्द्रानन्देन सम्पादितम्, वाराणसी, षड्दर्शनप्रकाशनप्रतिष्ठानम्, १९६८ ।

४०- महाराजाधिराजभोजः (१०७५-१११० वि.सं.) तत्त्वप्रकाशः, श्रीकुमारदेवअघोरशिवाचार्यरचित व्याख्याभाषानुवादसहितः, डा. कामेश्वर-नाथमिश्रसम्पादितः वाराणसी, चौखम्बा ओरियन्टालिया, १९३६।

४१- मिश्रः, छविनाथः न्यायोक्तिकोशः, दिल्ली, अजन्ता पब्लिकेशन्स १९७८,

४२- मिश्रः डा. राममनोहरः, भूषणसारपरमलघुमञ्जूषयोः सिद्धान्तानां समीक्षा, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः १९८३ (शोध-ग्रन्थः)।

४३- मिश्रः, डा. विद्यानिवासः भारतीय भाषाशास्त्रीय चिन्तन की पीठिका, पटना, बिहारराष्ट्रभाषा परिषद् १९७८,

४४- मिश्रः वाचस्पतिः खण्डनोद्धारः रामप्रपन्नाचार्यस्य दीपिकासहितः, पोरबन्दर (सौराष्ट्र), श्रीरामानन्दपीठम् शेषमठम् १९७३।

४५- मिश्रः, वाचस्पतिः, न्यायवार्तिकतात्पर्यटीका, श्रीराजेश्वरद्राविडेन संशोधिता, वाराणसी, चौखम्बासंस्कृत सीरीज आफिस १९२५।

४६- मिश्रः, शोभाकान्तः, शब्दार्थतत्त्व, पटना, बिहारहिन्दीग्रन्थ अकादमी, १९८६।

४७- मिश्रः, हीरालाल; योगतन्त्रव्याकरणशास्त्रदृष्ट्या बौद्धपदार्थविमर्शः, वाराणसी, सम्पूर्णानन्दसंस्कृत विश्वविद्यालयः १९७५ (शोधग्रन्थोऽप्रकाशितः)।

४८- मौनि, श्रीकृष्णभट्टः (१६८५-१७१५ वि. सं.) वृत्तिदीपिका, जयपुर, राजस्थान पुरातत्त्वान्वेषण मन्दिर, १९५६।

४९- शर्मा, गंगासहायः, न्यायप्रदीपः, बम्बई, खेमराज श्रीकृष्णदास।

५०- शर्मा, डॉ. दीप्तिः, व्याकरणकोटियों का विश्लेषणात्मक अध्ययन, पटना, बिहारहिन्दीग्रन्थअकादमी, १९८७ (शोधग्रन्थः)।

५१- शर्मा, डॉ. वीरेन्द्रः, वाक्यपदीयसम्बन्धसमुद्देश का एक विवेचनात्मक अध्ययन होशियारपुरम्, पंजाब विश्वविद्यालयः १९७७ (शोधग्रन्थः)।

५२- शर्मा, योगश्वरदत्तः, अभिधा-विमर्शः, दिल्ली, ईस्टर्न बुक लिंकर्स, १९८० (शोध-ग्रन्थः)।

५३- शास्त्री, डॉ. रामशरणः, पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमांसा, दिल्ली, वैद्य भीमसेनशास्त्री १९७६ (शोध ग्रन्थः)।

५४- शुक्लः, डॉ. कालिकाप्रसादः, वैयाकरणानामन्येषां च मतेन शब्दस्य स्वरूपतच्छक्तिविचारः, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः १९७९ (शोधग्रन्थः)।

५५- शुक्ल; डॉ. रामलखनः, शब्दशक्तिविवेचन, वाराणसी, विश्वविद्यालयप्रकाशन, १९७६।

५६- शुक्लः पं. श्रीसूर्यनारायणः, पाणिनिव्याकरणे वादरत्नम्, वाराणसी, चौखम्बासंस्कृतसीरीज आफिस, १९३२।

५७- शुक्ल; श्रीवेणीमाधवशास्त्री, परिष्कारदर्पणः, शुक्लश्रीराजनारायणशास्त्रिणा संशोधितः सम्पादितश्च, वाराणसी, चौखम्बा संस्कृत सीरिज आफिस १९३४ ।

५८- संस्कृतविमर्शः, खण्डः८-९, भागः१-२ राष्ट्रियसंस्कृतसंस्थानम्, दिल्ली, १९८०-८१ (पञ्चम-विश्वसंस्कृतसम्मेलनविशेषाङ्कः) ।

५९- सारस्वती सुषमा, वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका सप्तदशवर्षे १-४ अङ्काः, वि. संवत् २०२० शारदी पूर्णिमा, वाराणसी

६०- सारस्वती सुषमा (सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसंधानपत्रिका) वाराणसी पञ्चमविश्वसंस्कृत सम्मेलनविशेषाङ्कः, ३६ वर्षे १-४ अङ्काः १९८१-८२,

६१- सास्वती सुषमा, म. म. गोपीनाथकविराजजन्मशताब्दीविशेषाङ्कः, ३९ वर्षे १-४ अङ्काः, १९८४-८५ वाराणसी ।

६२. सारस्वती सुषमा, वाराणसेयसंस्कृतविश्वविद्यालयशोधपत्रिका, त्रयोदशवर्षे १-४ अङ्काः वि. संवत् २०१५ फाल्गुनपूर्णिमा, वाराणसी ।

६३- सिद्धान्तवागीशः, भवानन्दः,(१६०० ई.) कारकचक्रम्, माधवतर्कालङ्कारस्य माधवीटीकया सीताशरणत्रिपाठिनः प्रदीपटीकया युतम्, वाराणसी, चौखम्बासंस्कृतसीरिजआफिस, १९८२ ।

६४- सिद्धान्तवागीशः, भवानन्द (१६०० ई.) लकारार्थनिर्णयः, तारानाथस्य बङ्गानुवादः, कलकत्ता, श्रीकुलका प्रसादराय, बङ्गाब्द १३४६ ।

६५- सिंहः, डॉ. बलदेवः, पदपदार्थसमीक्षा, कुरुक्षेत्र, कुरुक्षेत्रविश्वविद्यालयः, १९६९ (शोधग्रन्थः) ।

६६- सुब्रह्मण्यशास्त्री, वे., शाब्दतरङ्गिणी,मद्रास, मद्रपुरीसंस्कृतविद्यासमितिः, १९६९ ।

६७- स्वरमङ्गला - राजस्थान संस्कृत अकादमी, जयपुरम्, वर्षे १२ अङ्काः ३-४, १९८७,

६८- स्वरमङ्गला - राजस्थानसंस्कृतअकादमी जयपुरम् वर्षे १४ अङ्कः २, १९८९ ।

# शब्दानुक्रमणिका

''अत्र भाषा रम्या । परिशोधनीयविषय उपक्रमोपसंहारादिभिः सम्यङ् निरूपितम्। बौद्धार्थसत्ता (उपचारसत्ता) हर्युपज्ञमिति प्रधानोऽयं विषयोऽत्र प्रबन्धे । नैयायिकमीमांसकादिभिबौद्धार्थवादो न स्वीकृतः । तदवलम्बनेन बौद्धार्थखण्डनमत्र विहितम् । न्यायवासनया बौद्धार्थस्य मुनित्रयासम्मतत्वम् । अत एव नागेशनाटकमात्रत्वञ्च ग्रन्थेऽस्मिन्नभिहितम्'' इति

– पेरिसूर्यनारायणशास्त्री, व्याकरणरत्नव्याकरणाचार्य-
दर्शनाचार्यः राष्ट्रपतिसम्मानितः, राजमहेन्द्रवरम् ।

''अस्मिन्निबन्धे शब्दार्थयोर्विशेषतस्त्वर्थस्य बौद्धत्वं बाह्यत्वं वेति विमर्शपूर्वकं बाह्यार्थ एव सप्रमाणं प्रतिष्ठापितः । पतञ्जलिदिशा भर्तृहरिदिशा च विवेच्यमाने ग्रन्थकृतो बाह्यार्थपक्ष एव भूयान् प्रामाणिको भासते । प्रसङ्गवशाद्वैयाकरणेतराणां सिद्धान्ता अपि पर्यालोचिताः ! ...स्वपक्षमण्डने समुपस्थापितानां तर्काणां विन्यासोऽपि साधुः । ग्रन्थकृतः प्रतिपादनं सुस्पष्टम्, सर्वेषां मतानां विवेचनं सुव्यवस्थितञ्च'' इति

– मिश्रोपाह्वो विद्यानिवासः, नवभारतटाइम्समुख्य-
सम्पादकः काशीविद्यापीठसम्पूर्णानन्दसंस्कृत-
विश्वविद्यालययोः कुलपतिचरः नवदिल्ली ।

ISBN 81-86027-02-5